महाकवि भासप्रणीतम्

# स्वप्नवासवदत्तम्

## नाटकम्



... एण्ड सन्स
...डिपो
..., बनारस सिटी।

संजीवनीव्याख्याकारः—
पण्डित विजयानन्द त्रिपाठी

महाकविभासप्रणीतम्

# स्वप्नवासवदत्तम्

## नाटकम्

श्रीकविविजयानन्दत्रिपाठिकृतया
सञ्जीवनीसमाख्यया व्याख्यया
हिन्दीभाषानुवादेन च
सम्वलितम्

बाँकीपुरस्थग्रन्थमाला-
कार्यालयाधिपतिना
प्रकाशितम्



[ ...ीय संस्करणम् ] १९२९

# अवतरणिका

अस्मन्मान्यैः सहृदयैः साहित्यमर्मज्ञैः पण्डितविजयानन्द-त्रिपाठिभिः भासीयं स्वप्नवासवदत्तं स्वकृतया सञ्जीवनीव्याख्यया समुज्जीवितमिति नितरां मनः प्रसीदति। प्रणेतुः बहुश्रुतत्वात् वर्षीयस्यपि वयसि महोद्योगशालित्वाच्च सेयं सञ्जीवनी मल्लिनाथसञ्जीवनीव न केवलं छात्राणां यावत्प्रौढविदुषामपि समभिमतं साहाय्यमाचरिष्यतीति प्रतीमः। भासस्य कालिदासादपि प्राचीनतरत्वात्स्वप्नवासवदत्तोक्तयः यत्र तत्र दुरूहाः। ताः सर्वाः व्याख्याकृता वैशद्येन सारल्येन च नातिप्रौढैरपि सुबोधाः विहिताः इति सर्वेषामपि संस्कृतप्रणयिनां महानयमुत्सवस्यावसरः।

स्वप्ननाटकप्रणेता भासः कालिदासेन मालविकाग्निमित्र-प्रस्तावनायां कविपुत्रसौमिल्लादिभिः सह वर्णितः। हर्षचरितोपक्रमे च "सूत्रधारकृतारम्भैर्नाटकैर्बहुभूमिकैः। सपताकैर्यशो लेभे भासो देवकुलैरिव।" इति भासकवेरुल्लेखो बाणभट्टेन विहितः। दण्डिमहाकविश्च "सुविभक्तमुखाद्यङ्गैर्व्यक्तलक्षणवृत्तिभिः। परेतोऽपि स्थितो भासः शरीरैरिव नाटकैः।" इति अवन्तिसुन्दरीकथोपक्रमे भासः संस्तुतः। अस्य कवेः समयः

सर्वथा न निश्चितः। तथापि न केवलं वैक्रमाष्टमशतकोद्भूतात् दण्डिकवेः सप्तमशतकोद्भूतात् बाणकवेश्च किन्तु ताभ्यामपि अतिप्राचीनतरात् कालिदासादपि प्रत्नतरोऽयं भासकविरिति विदुषामतिरोहितम्। तस्यास्य बहुषु नाटकेषु लुप्तेषु स्वप्नवासवदत्तमेकं चिरादवशिष्टम्। अद्यापि च दाक्षिणात्यविदुषामन्वेषणात् जीवति। "भासनाटकचक्रेऽपिच्छेकैः क्षिप्ते परीक्षितुम्। स्वप्नवासवदत्तस्य दाहकोऽभून्न पावकः।" इति किल जल्हणकृतसूक्तिमुक्तावल्यां राजशेखरसूरेरन्यस्य वा कस्यचिदुक्तिः। प्रतिमाप्रतिज्ञायौगन्धरायणचारुदत्तादीनां तु भासकृतत्वं कैश्चिदुक्तं नाद्यापि प्रमाणप्रतिपन्नम्। तदिदं भासकीर्तिकायव्यूहादेकमात्रमवशिष्टं स्वप्नवासवदत्तं सम्प्रति सञ्जीवन्या सनाथितं संस्कृतरसिकानां छात्राणां प्रौढविदुषाञ्च करकमलेषु सानुनयं समर्प्पयति।

रामावतार शर्मा।

# संक्षिप्तो वक्तव्यांशः

(१) वत्सराज उदयनः—एष पाण्डुवंश्यः पाण्डवादर्जुनात् षड्विंशः पुरुष इति कथासरित्सागरात्पुराणेभ्यश्च प्रतीयते, परन्त्वत्रापि सन्देहाभाव इति वक्तुं न शक्यते। गङ्गास्रोतसाऽपहृते हस्तिनापुरे अर्जुनान्नवमो नेमिचक्रो नाम राजा वत्सदेशे कौशाम्ब्यामावासमकरोदिति पौराणिकी कथा। अत एव "आसीदर्जुनात्षष्ठः सहस्रानीको नाम राजा कौशाम्ब्याम्" इति वदन् प्रियदर्शिकाटीकाकारः श्रीकृष्णसूरिर्भ्रान्त एव, तत्पर्यन्तं पाण्डुवंश्यानां कौशाम्ब्याधिवासस्यैवाभावात्। एतेनोदयनं शतानीकस्य पुत्रं सहस्रानीकस्य नप्तारं कथयन् प्रतिज्ञायौगन्धरायणे भासोऽपि भ्रान्त एव प्रतीयते। भागवते चार्जुनवंशाख्याने कतिपयराजोल्लेखानन्तरं पञ्चविंशस्य शतानीकस्य राज्ञः पुनरुल्लेखो दृश्यते तत्पुत्रस्य च दुर्दमन इनि नाम लिखितमस्ति। अयमेवोदयनो वत्सराज इति वक्तुं शक्यते। किन्तु अस्य शतानीकस्य पितुर्नाम तत्र सहस्रानीक इति नोपलभ्यते इति कथमयं भासोक्तः सहस्रानीकस्य नप्ता भवितुमर्हति। दुर्मीमांस्यैषा जटिलैतिहासिकी चर्चेत्युपरम्यते।

भागवते नवमस्कन्धे २२ शेऽध्याय उक्तोऽर्जुनवंशक्रम ईदृशः—

१ अर्जुनः
२ अभिमन्युः
३ परीक्षित्
४ जनमेजयः
५ शतानीकः
६ सहस्रानीकः
७ अश्वमेधजः
८ असीमकृष्णः
९ नेमिचक्रः
(कौशाम्बीमधिवस्ता)
१० चित्ररथः
११ कविरथः
१२ वृष्णिमान्
१३ सुषेणः

१४ सुनीथः
१५ नृचक्षुः
१६ सुखीनलः
१७ पारिप्लवः
१८ सुनयः
१९ मेधावी
२० नृपञ्जयः
२१ दूर्वः
२२ निमिः
२३ बृहद्रथः
२४ सुदायः
२५ शतानीकः
२६ दुर्दमनः ( उदयनः ? )
२७ वहीनरः ( नरवाहनदत्तः ? )
२८ दण्डपाणिः
२९ निमिः
३० क्षेमकः

२—अयमुदयनो वत्सराजः खीष्टाब्दात्पूर्वं ४७४ वर्षमारभ्य ४४९ वर्षपर्य्यन्तं मगधसिंहासनारूढ़स्य दर्शकस्य भगिनीं पद्मावतीं परिणीतवानिति निस्संशयमयं तत्कालीनः।

३—वत्सराजधान्याः कौशाम्ब्याश्च दुर्गस्य च भग्नावशेषो योजनायतोऽद्यापि "कोशम" नाम्ना प्रथितः यमुनातटे उपलभ्यते।

४—यद्यपि महाकवेर्भासस्य समयोऽद्यापि न निश्चितस्तथापि खीष्टाब्दारम्भात् पूर्वतन्यां चतुर्थशताब्द्यां वर्त्तमानेन मौर्य्यचन्द्रगुप्तामात्येन कौटिल्येन स्वप्रणीतेऽर्थशास्त्रे सैन्यप्रोत्साहनप्रकरणे प्रतिज्ञायौगन्धरायणस्थो "नवं शरावं सलिलस्य पूर्णं" इति भासीयः श्लोकः उदाहरणतयोद्धृत इत्ययमवश्यं ततोऽपि पूर्वमुत्पन्न इत्यवसीयते। पाणिनिव्याकरणासिद्धान्बहुप्रयोगानयं स्वनाटकेषु प्रयुक्तवानित्ययं खीष्टाब्दारम्भात्पूर्वतनेषु षट्सु सप्तसु वा वर्षेषु भवात् पाणिनेरपि पूर्वं जातो भवेदिति कस्यचिदनुधावनन्तु न सम्यक्। यतः खीष्टाब्दात्पूर्वतन्यां पञ्चमशताब्द्यां मगधसिंहासनारूढस्य दर्शकस्य राज्ञो भगिन्या पद्मावत्या सहोदयनस्य परिणयकथामुपजीव्यायं

स्वप्नवासवदत्तं नाटकं प्रणिनायेति तदधस्तन एवायं भवितु-
मर्हति । व्यासवाल्मीकिवदयं भविष्यमपि वर्णयेदिति तु
श्रद्धाजाड्यमात्रम् । अनयैव युक्त्या तथा प्रयुञ्जानाः कालिदा-
सादयोऽपि ततः पूर्वतनाः कथं न भवेयुः ।

५—गजहृदयहारिणीं घोषवतीं वीणामवाप्य गजाखेट-
व्यसनिनो मन्त्रिषु निक्षिप्तराज्यभारस्य सचिवायत्तसिद्धेरस्यो
दयनस्य वत्सराजस्य बहुलो वत्सराज्यांशः केनाप्यविज्ञात-
वृत्तेनारुणिनाम्ना तदानीन्तनेन शत्रुणा क्रमशोऽपहृतः । तं पुन-
रुद्दिधीर्षवो यौगन्धरायणादयोऽमात्याः स्वराज्यप्रतिवासिनं
प्रबलं मगधराजं दर्शकं स्वानुकूलं विधित्सवो मिथः संमन्त्र्य
तद्भगिन्या पद्मावत्या सह स्वामिनो विवाहं घटयितुकामा-
स्तत्र प्रतिबन्धभूतां राज्ञीं वासवदत्तामनुनीय लावाणकग्रामे
साग्नौ दग्धेति मृषैव समुद्घोषयन्तः क्वापि तां सगोपनं निक्षेप्तु-
मैच्छन् । ततो वासवदत्ताशोकविकलस्य राज्ञो रक्षायां शत्रु-
विजयप्रबन्धे च रुमण्वन्तं नियुज्य रूपपरिवर्त्तनदक्षो नीति-
निपुणो यौगन्धरायण आत्मानं परिव्राजकब्राह्मणवेषं वास-
वदत्तां चावन्तिकावेषां विधाय सगोपनं गत्वा राजगिरिपरि-
सरवर्त्तिनि तपोवने मातृदर्शनार्थमागतायाः मगधराजदर्शक-
भगिन्याः पद्मावत्याः करे ममेयं प्रोषितभर्तृका भगिनीति उक्त्वा
प्रकृतघटनोपयिकीमवधार्य्य निचिक्षेप ।

अनन्तरं च काले काले वासवदत्तामुखाद्ब्रह्मचारिणश्च
वर्णितानुदयनगुणान् श्रुत्वा प्रवृद्धानुरागया पद्मावत्या सह
वत्सराजस्य यथा विवाहः, स्वप्ने वासवदत्तादर्शनं, दर्शकसेना-
साहाय्येन विजितादारुणेर्वत्सराज्यलाभः, वासवदत्ताप्राप्तिश्चा-
भूत्तत्सर्वं वृत्तमवलम्ब्य स्वप्ने दृष्टा वासवदत्ता यत्रेत्यन्वर्थं स्वप्न-
वासवदत्तं नाटकं भासमहाकविः प्रणिनायेति कथावस्तुसंक्षेपः ।

६—यदा च विलुप्तप्रायभासीयसर्वस्वोद्धारकारिणा सहृदयान्तर्वाणिगणोपकारिणा मान्येन गीर्वाणवाणीप्रणयिना श्रीमता गणपतिशास्त्रिणा विविधपाठान्तरोपेतं स्थूलाक्षरैर्मुद्रितं मूलमात्रं स्वप्नवासवदत्तं मन्त्राङ्कव्याख्याननामकतृतीयाङ्कक्षुद्रव्याख्यासहितं प्रतिज्ञायौगन्धरायणश्च प्रकाशितमभूत्, नवानुरागिभिश्च पटनाविश्वविद्यालयाधिकारिभिः पाठ्यपुस्तकरूपेणोभयमपि प्रधानविद्यालयेषु निर्धारितमभूत्तदैव केनापि सुहृदा दुरूहयोरुभयोर्व्याख्यां कर्तुं प्राणोदितेन मया स्वप्नवासवदत्तस्य संक्षिप्ता प्रतिज्ञा-नाटिकायाश्च वृहती व्याख्या कृतासीत्। किन्तु केनापि कारणेन स्वप्नवासवदत्तव्याख्या मुद्रिता नाभूत्; प्रतिज्ञानाटिकाव्याख्या च मुद्रयितुमुपक्रान्तापि गणपतिशास्त्रिणा व्याख्याय पुनः सा प्रकाशितेति अथ च दुरूहेति कृतकोलाहलैः अध्यापकैर्निन्दिता पाठ्यश्रेणीतः कियत्कालानन्तरमेव निस्सारितेति च अर्द्धमुद्रितैव स्थिता।

स्वप्नवासवदत्तं त्वधुनापि तदवस्थमेवेति तदीयया पूर्वलिखितया संक्षिप्तयाधुना परिवर्द्धितया विशदीकृतया च सञ्जीवन्याख्यया व्याख्यया सह मुद्रयित्वा सत्स्वपि विविधेषु व्याख्यानान्तरेषु अन्यैरिव प्रकाश्यते। अन्तरञ्चान्तरवेदिभिरेवोन्नेयम्। इयमपि व्याख्या सर्वथा समीचीनेवेति वक्तुं न शक्यते। मुद्रणावसरेऽनुपस्थितेन मयास्य प्रूफपत्राण्यपि न दृष्टानीति मुद्रणदोषाच्च यत्र तत्र वहवो दोषा उपलभ्यन्ते। ते च प्रायः शुद्धिपत्रे परिशोधिताः शेषाश्च द्वितीयसंस्करणे परिशोधयिष्यन्ते इति प्रणतेन मया सम्भावितस्खलनक्षमायै सुधियः प्राथ्यन्ते—

विजयानन्द त्रिपाठिना।

श्रीगणेशाय नमः ।

महाकविभासप्रणीतम्

# स्वप्नवासवदत्तम्

## नाटकम्



( नान्द्यन्ते ततः प्रविशति सूत्रधारः ) (१)

---

श्रीकवि-विद्यारत्न-पण्डितविजयानन्दत्रिपाठिकृतया सञ्जीवनीसमाख्यया व्याख्यया सम्वलितम् ।

प्रणम्य पितरौ भक्त्या विजयानन्दपण्डितः ।
विवृणोति यथापेक्षं भासीयं स्वप्ननाटकम् ॥१॥
"भारती" भाससुकवेर्दुर्व्याख्याविषमूर्च्छिता ।
एषा सञ्जीवनी व्याख्या तामद्योज्जीवयिष्यति ॥२॥

अथ महाकविः भासः स्वप्नवासवदत्तं नाम नाटकं प्रणिनीषुः स्वेप्सितप्रतिबन्धिप्रत्यूहव्यूहव्यपोहाय मङ्गलपाठं सूत्रधारेण प्रथममाचरणीयं पश्यन् तस्य प्रवेशं तावदाह—नान्द्यन्ते इत्यादिना ।

(१) नान्द्यन्ते—नन्दयति परिषदं या सा नान्दी रङ्गद्वाराङ्गभूता नटैः सम्पादनीया भेरीमृदङ्गादिवादित्रवादनक्रिया, तस्याः अन्ते अवसाने परिसमाप्तौ ततः वाद्यवादनादिसमापनोत्तरकाले सूत्रधारः—"नाट्यस्य यदनुष्ठानं तत्सूत्रं स्यात्सबीजकम् । रङ्गदैवतपूजाकृत् सूत्रधार इहोदितः ॥"

सूत्रधारः--

उदयनवेन्दुसवर्णावासवदत्तावलौ बलस्य त्वाम्
पद्मावतीर्णपूर्णौ वसन्तकम्रौ भुजौ पाताम् ॥१॥ (२)

इत्युक्तलक्षणः नाटकीयेतिकर्त्तव्यनिर्वाहकः व्यवस्थापकाऽपरनामकः प्रधान-नटः प्रविशति रङ्गस्थले प्रवेशं करोति । अत्र 'तत' इत्युक्तिर्नातीवोपयुज्यते ।

(२) अथ सूत्रधारः स्वकर्त्तव्यप्रधानं मङ्गलं तावत्समाचरति—उदयेति । उदयनवेन्दुसवर्णौ—उदये उदयकाले नवः नवीनः यः इन्दुश्चन्द्रस्तेन सवर्णौ समानवर्णौ तत्सदृशौ धवलौ सन्तापहरौ चेत्यर्थः । आसवदत्तावलौ—दत्तः आसवः मद्यं यस्यै सा आसवदत्ता । आहिताग्न्यादित्वात् दत्तशब्दस्य परनिपातः । दत्तासवा इत्यर्थः । तथाभूता अवला रेवती नाम्नी बलभद्रप्रिया याभ्यां तौ । याभ्यां भुजाभ्यां बलरामः स्वप्रियायै मद्यं समर्पयति स्मेत्यर्थः । एतेन बलभद्रस्योदयनस्य चैतन्नाटकीयप्रधाननायकस्य विलासित्वं सूचितम् । अथवा आसवेन निपीतेन मद्येन दत्तम् आ समन्तात् बलं शौर्य्यं याभ्यां तौ । एतेन स्वभावतः पराक्रान्तयोरपि भुजयोर्बलातिशयो मद्यसेवानिबन्धनः द्योत्यते । पद्मावतीर्णपूर्णौ—पद्माभ्यां सनालाभ्यां कमलाभ्याम् इव अवतीर्णौ लब्धावतारौ अत एव पूर्णौ मृदुत्वादिभिरुपादानगुणैः समृद्धौ च । वीर-बाहुत्वात्कर्कशावपि मार्दवादिगुणसम्पन्नावित्यर्थः । वसन्तकम्रौ—वसन्ते यौ विटपौ नूतनविपुलपुष्पपल्लवादिललितौ वृक्षशाखे ताविव कम्रौ कमनीयौ । शाकपार्थिवादित्वात्समासः । यथा वसन्ते निबिडच्छायादिदानेन विटपौ रक्षाकरौ तद्वत्प्रलम्बौ रक्षाकरणसमर्थौ चेत्यर्थः । कोमलविटपानुकारिणौ बाहू—इति कालिदासः । एवं सर्वथा रक्षणयोग्यताविशिष्टौ बलस्य बलभद्रस्य भुजौ बाहू त्वां सामाजिकवर्गं पातां रक्षताम् । निर्विघ्नोभिनय-दर्शनानन्देनाप्यायितं कुरुतामित्यर्थः । अत्र मुद्रालङ्कारविधया सभङ्गादिश्ले-षभङ्ग्या च प्रस्तुतनाटकीयानां प्रधानपात्राणां उदयन-वासवदत्ता-पद्मावती-वसन्तकानां निर्देशोऽपि कविना कृतः । एषा च भासस्य शैली तदीये-ष्वन्येष्वपि नाटकेषु प्रायो दृश्यते ॥ १ ॥

एवमार्यमिश्रान् विज्ञापयामि। अये किंनु खलु मयि विज्ञापनाऽव्यग्रे शब्द इव श्रूयते। अंग! पश्यामि। (३)

( नेपथ्ये ) (४)

उस्सरह उस्सरह अय्या! उस्सरह। [उत्सरतोत्सरतार्याः! उत्सरत।] (५)

सूत्रधारः--भवतु, विज्ञातम्। (६)

---

(३) एवमिति—एवं—विवक्षितप्रकारम्। आर्य्यमिश्रान्—नाटकाभिनयदर्शनार्थमागताः "कुलं शीलं दया दानं धर्मः सत्यं कृतज्ञता। अद्रोह इति येष्वेतत्तानार्यान् सम्प्रचक्षते" इत्याद्युक्तकुलशीलादिसम्पन्नाः पुरुषा आर्य्या मिश्राः पूज्याः तान् सामाजिकान्भवत इत्यर्थः। विज्ञापयामि—यदहं कर्त्तुमुद्यतस्तत् निवेदयामि। अये! आश्चर्य्यम्—मयि विज्ञापनार्थे व्यग्रे व्यासक्ते कृतोद्योगे सति किन्नु खलु—कुतोनु खलु शब्द इव श्रूयते अव्यक्तः कलकलो यथा कर्णगोचरो भवति। अङ्ग—पुनः। 'पुनरर्थेऽङ्ग' इत्यमरः। पश्यामि कस्य कीदृशोऽयं शब्द इति भूयोऽवधारयामीत्यर्थः। प्रकृतमर्थं जानानस्यापि सूत्रधारस्यैषोऽज्ञानाभिनयश्चमत्कारातिशयेन पात्रप्रवेशं कारयितुं बोध्यः।

( ४ ) नेपथ्ये—नेपथ्यं नटानां स्वस्ववर्णिकापरिग्रहणाय पटान्तरितं स्थानं तत्र वक्ष्यमाणः शब्दः श्रूयत इत्यर्थः।

( ५ ) उत्सरतेति। उत्सरत! उत्सरत!! आर्य्याः! उत्सरत!!! उत्सरत—अपसरत, मार्गमध्यादपसृत्य दूरं व्रजतेत्यर्थः। सम्भ्रमाद्भृशोक्तिः।

( ६ ) भवत्विति। भवतु—अस्तु, विज्ञातं मयावधारितमित्यर्थः। "असूयोपगमेऽस्त्वि" त्यमरोक्तेः असूयार्थकास्तुसमानार्थकभवतुपदेन निन्द्यः खल्वेष समुदाचारः प्रवर्तते इति मया ज्ञातमित्याशयः सूत्रधारस्य। अत एव धृष्टमिति श्लोके आह।

भृत्यैर्मगधराजस्य स्निग्धैः कन्यानुगामिभिः ।
धृष्टमुत्सार्यते सर्वस्तपोवनगतो जनः ॥२॥ (७)

( निष्क्रान्तः (८)

स्थापना । (९)

---

(७) विज्ञातमेवाह—भृत्यैरिति । मगधराजस्य गयापरिसरवर्ती विस्तृतो देशः मगधः तस्य राजा मगधराजः 'राजाहः सखिभ्य' इति समासान्तष्टच् । तस्य मगधेश्वरस्य स्निग्धैः स्नेहपात्रैराप्तैरिति यावत् कन्या—पद्मावती तस्याः अनुगामिभिः अनुचरैः सहचरैः भृत्यैः भटैः तपोवनगतः आश्रममार्गस्थः सर्वः बालवृद्धतापसादिः जनः लोकः धृष्टम् अनुचितमपि निःशङ्कं यथा तथा उत्सार्य्यते पद्मावतीप्रवेशसौकर्य्याय पथि तापसजनसम्मर्दः दूरीक्रियत इत्यर्थः । गच्छतो राजादेरग्रेसरैर्भृत्यैः पथि जनसमवायोऽपसार्यत इति समुदाचारः सेयमुत्सारणा नाम । तदीय एवैषोऽनुचितः शब्दः श्रूयत इत्यर्थः ॥२॥

(८) निष्क्रान्तः—इत्थं पात्रप्रवेशं सूचयित्वा रङ्गस्थलान्निर्गत इत्यर्थः ।

(९)स्थापनेति। स्थापना—कथावस्त्वंशस्थापनात—प्रस्तावना आमुखमित्यर्थः । एष प्रयोगातिशयो नाम प्रस्तावनाभेदः यथाह दर्पणकारः—"यदि प्रयोग एकस्मिन् प्रयोगोऽन्यः प्रयुज्यते । तेन पात्रप्रवेशश्चेत् प्रयोगातिशयस्तदा" । इति । अत्र विज्ञापयितुमिच्छता सूत्रधारेण 'भृत्यै' रित्यादिना पद्मावत्याः प्रवेशं सूचयित्वा निष्क्रान्तेन स्वप्रयोगमतिशयान एव प्रयोगः प्रयोजितः । अत्र "नेपथ्योक्तं श्रुतं तत्र त्वाकाशवचनं तथा । समाश्रित्यापि कर्तव्यमामुखं नाटकदिषु । एषामामुखभेदानामेकं कञ्चित्प्रयोजयेत् । तेनार्थमथ पात्रं वा समाक्षिप्यैव सूत्रधृक् । प्रस्तावनान्ते निर्गच्छेत्ततो वस्तु प्रयोजयेत्"इति नखकुट्टमतानुसारिणीव प्रस्तावनोपनिबद्धा कविनेति समवधेयम् ।

---

( प्रविश्य )

भटौ—उस्सरह उस्सरह अय्या ! उस्सरह । [ उत्सरतो-त्सरतार्याः ! उत्सरत । ]

( ततः प्रविशति परिव्राजकब्राह्मणवेषो यौगन्धरायणः आवन्तिकावेषधारिणी वासवदत्ता च ) (१०)

यौगन्धरायणः—( कर्णं दत्वा ) कथमिहाप्युत्सार्यते ! कुतः । (११)

धीरस्याश्रमसंश्रितस्य वसतस्तुष्टस्य वन्यैः फलै-
र्मानार्हस्य जनस्य वल्कलवतस्त्रासः समुत्पाद्यते ।
उत्सिक्तो विनयादपेतपुरुषो भाग्यैश्चलैर्विस्मितः
कोऽयं भो निभृतं तपोवनमिदं ग्रामीकरोत्याज्ञया ३ (१२)

(१०) परिव्राजकब्राह्मणवेष इत्यादि । परिव्राजकस्य संन्यासिनः ब्राह्मणस्य इव वेषो यस्य सः । कार्यवशात् परिगृहीतसंन्यासिब्राह्मणवेषः यौगन्धरायणः कथानायकस्य वत्सराजस्योदयनस्य कुलागतो मन्त्री । आवन्तिकावेषधारिणी—कार्यवशात् अवन्तिजनपदभवाङ्गनावेषधारिणी अवन्तिदेशाधिपतेश्चण्डमहासेनस्य तनया उदयनस्य वत्सराजस्य महिषी वासवदत्ता च । तयोस्तथा वेषधारणपूर्वकमिहागमने कार्यं च भूमिकातोऽवसेयम् । अत्र 'तपस्विब्राह्मणवेष' इत्येवं पठितुं युक्तम् । षष्ठाङ्के पद्मावत्याः निक्षेप्तुर्ब्राह्मणस्यैवोल्लेखात् ।

(११) कर्णं दत्वा—श्रुतिमभिनीयेत्यर्थः । कथमिहापि तदयोग्ये तपोवनेऽपि उत्सार्यंते अनुचितापसारणोद्घोष्यते ? अनौचित्यमेव विवृणोति कुत इत्यादिना । कुत इत्यग्रिमश्लोकान्वयि ।

(१२) धीरस्येति । धीरस्य दुस्त्यजस्यापि विविधभोगवासनानिवहस्य त्यागो धैर्यवतः आश्रमसंश्रितस्य तरुमूलपर्णकुटीरादि श्रितवतः । वन्यैः वनभवैः फलैः तुष्टस्य परितृप्तस्य वसतः वल्कलवतः तरुत्वग्वसनस्य,

**वासवदत्ता**—अय्य ! को एसो उस्सारेदि । [ आर्य, क एष उत्सारयति । ] (१३)

**यौगन्धरायण**–भवति ! यो धर्मादात्मानमुत्सारयति(१४)

**वासवदत्ता**—अय्य ! ण हि एव्वं वत्तुकामा, अहं वि णाम उस्सारइदव्वा होमि त्ति [ आर्य ! न ह्येवं वक्तुकामा, अहमपि नामोत्सारयितव्या भवामीति ] (१५)

---

वसत्यशनवसनभोगसुखवितृष्णस्येत्यर्थः । अत एव मानार्हस्य सम्मानयोग्यस्य जनस्य तपस्विलोकस्य त्रासः उत्सारणाजनितं भयं कुतो हेतोः समुत्पाद्यते भृत्यैरुज्जृम्भ्यते ? भृत्यानामेतद्धार्ष्ट्यमतीवानुचितमित्यर्थः । स्वामिनिर्देशेन तथात्याचरतां भृत्यानामदोषत्वमनुसन्धायास्थाने तथा निर्देशदायिनं तेषां स्वामिनमप्युपालभते उत्सिक्त इति । भोः रे ! उत्सिक्तः उन्मर्यादः, चलैः विनश्वरैः भाग्यैः विभवादिभिः विस्मितः गर्वाभिभूतः विनयात् शीलात् अपेताः रहिताः पुरुषा भृत्या यस्य सः । अत्र विनयाद्यपेतपुरुष इत्येव समीचीनः पाठो भवेत् । विनयादिभिः शीलादिभिरिति तदर्थः । ईदृशो विवेकविकलः कोऽयं किंप्रभुः निभृतं शान्तम् इदं तपोवनम् आज्ञया अस्थाने उत्सारणाकरणनिर्देशेन ग्रामीकरोति उद्धतजनप्रायं ग्राममिव अशान्तं सम्पादयति ? सर्वथैतद्धार्ष्ट्यमतीवानुचितमित्यर्थः ॥ ३ ॥

(१३) आर्य्येति । आर्य ! क एष उत्सारयति ? अस्थाने पात्रविशेषेऽपि च ईदृशानुचितोत्सारणकारी कोऽयं पुरुषापसद इत्यर्थः ।

(१४) भवतीति । भवति ! पूज्ये ! यः धर्मात् सर्वविधाभ्युदयसाधनभूतात् आत्मानम् उत्सारयति पातयति । स एष हि स्वपादयोरेव कुठारं क्षिपिन् न ज्ञायते कोऽयमित्यर्थः ।

(१५) आर्य्ये ! नहीति । आर्य्ये ! नहि एवं वक्तुकामा, अहमपि नामोत्सारयितव्या भवामीति । नहि, नैष ममाभिप्रायः अद्य नास्याधिक्षेपो मम विवक्षितः किन्त्वेवमह वक्तुकामा यदेष किं मामपि जनसाधारणव-

**यौगन्धरायणः**—भवति ! एवमनिर्ज्ञातानि दैवतान्य-वधूयन्ते। (१६)

**वासवदत्ता**—अय्य! तह परिस्समो परिखेदं ण उप्पादेदि, जह अअं परिभवो। [आर्य ! तथा परिश्रमः परिखेदं नोत्पाद-यति यथायं परिभवः ] (१७)

**यौगन्धरायण**—भुक्तोज्झित एष विषयोऽत्रभवत्या। नात्र चिन्ता कार्या। कुतः, (१८)

---

दुत्सारयेत् ? या हि अहम् एकदा स्वयात्रासु मम रक्षिपुरुषैरनुष्ठितमितर-जनोत्सारणोत्सवमन्वभवं सैवाहमपीदानीमन्येनेतरजनसाधारणवदुत्सार-यितव्या भवामीत्यात्मदशाविपर्य्यासमेवनुशोचामीत्याशयः।

(१६) भवतीति। भवति। एवं भवतीव अनिर्ज्ञातानि याथार्थ्येना-विदितानि दैवतान्यपि देववत्पूजार्हाण्यपि किमुतान्ये मनुष्याः अवधूयन्ते परिभूयन्ते। भवतीस्वरूपाज्ञाननिबन्धनः खल्वेष परिभवः कार्य्यवशादिदानीं न गणयितव्य इत्यर्थः।

(१७) आर्य्येति। आर्य ! तथा परिश्रमः परिखेदं नोत्पादयति यथायं परिभवः। परिश्रमः—लावणकग्रामादियद्दूरं पादचारेणागमनजनिता ग्लानिः तथा परिखेदं तादृशीं पीडां नोत्पादयति जनयति यथा यादृशोऽयं उत्सारणा-जनितः परिभवः अनादरः। "सम्भावितस्य चाकीर्त्तिर्मरणादतिरिच्यत" इति भावः।

(१८) भुक्तोज्झित इति। एष विषयः ईदृशः समुदाचारः अत्रभवत्या पूज्यया भुक्तोज्झितः—पूर्वं भुक्तः अनुभूतः अधुना कार्य्यवशादुज्झितः स्वयं परित्यक्तः इति अत्र विषये चिन्ता भवत्या न कार्य्या। कार्य्यवशात्स्वयमभ्यु-पगतो मनःखेदोऽनुचित इत्यर्थः। फलमुखं गौरवं न दोषायेति भावः तदेवाह कुत इति। यत इत्यर्थः। इदं वक्ष्यमाणश्लोकान्वयि।

पूर्वं त्वयाप्यभिमतं गतमेवमासी-
च्छ्लाघ्यं गमिष्यसि पुनर्विजयेन भर्तुः।
कालक्रमेण जगतः परिवर्तमाना
चक्रारपङ्क्तिरिव गच्छति भाग्यपङ्क्तिः ॥४॥ (१९)

भटौ—उस्सरह अय्या! उस्सरह। [उत्सरतार्याः! उत्सरत।]

( ततः प्रविशति काञ्चुकीयः ) (२०)

---

(१९) पूर्वमिति। पूर्वकार्यवशात्स्वरूपावच्छादनात् प्रथमं कौशाम्बीमात्र-स्वायत्तराज्यकाले वा एवं परिजनविभवोपेतं गतं गमनं भावे क्तः। त्वयापि, न केवलं प्रकृतेनानेन जनेन किन्तु भवत्यापि अभिमतम् ईप्सितम् आसीत्। मन्यतेर्भूते क्तः। अत एव त्वयेति कर्तरि 'क्तस्य च वर्तमान' इति न षष्ठी। 'कर्तृकर्मणो' रिति षष्ठ्यास्तु न लोकेति निषेधः। तवापीति पाठस्तु शोभते। भर्तुः विजयेन भवत्याः प्रकृतस्वरूपावच्छादनकार्य्ये फले परिणते सति स्वामिनो वत्सराजस्य सिद्धेन विजयेन शत्रुहृताखिलस्वराज्यलाभेन हेतुना पुनः भूयोऽपि (त्वं) श्लाघ्यं गौरवास्पदं प्रशंसनीयं (तदेव) गतं गमिष्यसि प्राप्स्यसि। अथवा श्लाघ्यं परिजनविभवोपेतत्वात्प्रशंसनीयं यथा तथा पुनः गमिष्यसि यास्यसि। अवश्यञ्चैतद्भविष्यतीत्याह कालेति। यतः कालक्रमेण समयपरिपाट्या परिवर्तमाना परिणामं भजन्ती—दशान्तरमनुभवन्ती सती जगतः संसारस्य तद्वासिजनस्येत्यर्थः। भाग्यपङ्क्तिः भाग्यधारा चक्रार-पङ्क्तिरिव चक्रे रथाङ्गे नाभिनेम्योरन्तराले तिर्यक् प्रोथितानां अराणां काष्ठखण्डानां श्रेणिरिव गच्छति पर्य्यायेण नीचैरुपरि च परिवर्तते। तदेष-फलमुखगौरवमिव कार्य्यवशात् भवत्या स्वयमभ्युपगतः कतिपयदिवस-स्थायी नान्तरीयकतयोपगत ईदृशोऽतात्त्विकः परिभवो न गणनीय इत्यर्थः। "नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण" इति कालिदासः ॥ ४ ॥

(२०) काञ्चुकीय इति। काञ्चुकीयः कञ्चुकी—"ये नित्यं सत्यसम्पन्नाः कामदोषविवर्जिताः। ज्ञानविज्ञानकुशलाः काञ्चुकीयास्तु ते मताः" इत्युक्त-

काञ्चुकीयः—संभषक ! न खलु न खलूत्सारणा कार्या। पश्य, (२१)

परिहरतु भवान् नृपापवादं
न परुषमाश्रमवासिषु प्रयोज्यम्।
नगरपरिभवान् विमोक्तुमेते
वनमभिगम्य मनस्विनो वसन्ति ॥५॥(२२)

उभौ—अय्य ! तह। [ आर्य ! तथा। ] (२३) (निष्क्रान्तौ)

यौगन्धरायणः—हन्त सविज्ञानमस्य दर्शनम्। वत्से ! उपसर्पावस्तावदेनम्। (२४)

---

लक्षणोऽन्तःपुराधिकृत आप्तो जनः अधुना 'चोबदार' इति प्रसिद्धः। 'वेणुकादिभ्यश्छण्वाच्यः'—इति गहादिगणपठितवार्तिकाच्छण् प्रत्ययः।

(२१) संभपक इत्युत्सारणाकारिणोरेकतरस्याभ्यर्हितस्य भटस्य नाम। न खल्विति संभ्रमात् वीप्सा।

(२२) परिहरत्विति। भवान् नृपापवादं नगरेपु इवेहापि राजाज्ञयेवोत्सराणां कर्तुं भवान् प्रवृत्त इत्येवमस्मद्राजनि वृथैवापरैरारोप्यमाणं परीवादं परिहरतु, अनुज्ञायां लोट् अन्यत्रेवाभ्यस्तामुत्सरणामिहास्थानेऽपि मा करोत्वित्यर्थः। कुत—एवमित्याकांक्षायामाह—यतः आश्रमवासिपु तपस्विजनेपु परुषं कर्कशं ( वचनं ) न प्रयोज्यम् प्रयोक्तुं न योग्यम्। तदपि कुत इत्याकांक्षायामाह—यतः एते मनस्विनः प्रशस्तमनसः—स्वातन्त्र्यप्रवणान्तःकरणाः इति यावत्, नगरपरिभवान् नगरेपु विविधजनबहुलेपु प्रायः सुलभान् परिभवान् तिरस्कारान् विमोक्तुं परिहर्तुं वनं निर्जनं शान्तम् अरण्यम् अभिगम्य आगत्य वसन्ति। अतः उत्सारणाघोषणे नात्र तपस्विनां परिभवः सर्वथा परिहर्तव्य इत्यर्थः। तादृशी नृपाज्ञा तु नगरविषयिण्येवेति भावः ॥४॥

(२३) आर्य्येति। आर्य्य ! तथा। भवदाज्ञा स्वीकृतेत्यर्थः।

(२४) हन्तेत्यादि। हन्तेति हर्षे। वासवदत्ताया विमाननाजनकोऽनर्थो

२

**वासवदत्ता**—अय्य ! तह । [ आर्य ! तथा ] (२५)
**यौगन्धरायणः**-(उपसृत्य) भोः ! किंकृतेयमुत्सारणा ? (२६)
**काञ्चुकीयः**—भोस्तपस्विन् ! (२७)
**यौगन्धरायणः**-( आत्मगतम् ) तपस्विन्निति गुणवान् खल्वयमालापः । अपरिचयात्तु न श्लिष्यते मे मनसि । (२८)
**काञ्चुकीयः**—भोः ! श्रूयताम् । एषा खलु गुरुभिरभिहितनामधेयस्यास्माकं महाराजदर्शकस्य भगिनी पद्मावती नाम ।

---

दिष्ट्या निवृत्त इत्यर्थः। अस्य काञ्चुकीयस्य दर्शनं बुद्धिः ज्ञानम्—विचार इति यावत् । सविज्ञानम्—विज्ञानेन परिष्कृतशास्त्रीयकर्तव्याकर्तव्यविवेकेन सहितम् अस्तीति शेषः । अत एव वत्से ! वासदत्ते ! तावत् इदानीम् एनं काञ्चुकीयं उपसर्पावः आवामस्य समीपं गच्छावः । श्वशुरसदृशस्य वृद्धस्य मन्त्रिणः राजमहिष्या अपि वत्से इति सम्बोधनं वात्सल ं द्योतयति ।

(२५) आर्य्येति । आर्य ! तथा । उपसर्पाव इत्यर्थः ।

(२६) भो—इति । किं कृता–किमर्थं कृता ?

(२७) भोस्तपस्विन्निति । एष वक्ष्यमाण वाक्यांशश्चमत्कारातिशयाय खण्डोक्तिरिव कविनोपनिबद्धः । अनुचितोत्सारणयावमतः कदाचिदेष कुपितस्तु नेतीति विज्ञातुं वेयमर्धोक्तिः ।

(२८) तपस्विन्नितीत्यादि । अयं तपस्विन् इति एषः आलापः सम्बोधनं गुणवान् खलु वेषसदृशः संमानसूचक एव तु किन्तु अपरिचयात् तादृशसम्बोधनस्य सर्वथा परिचयाभावात् अद्य यावदहमेवं कदापि न सम्बोधनविषयो जातोऽस्मीति तस्यापरिचितत्वाद्धेतोः मे मम मनसि न श्लिष्यते न संलगति नानेनाहमानन्दमनुभवामीत्यर्थः । कर्मवद्भावात् श्लिष्यतिरात्मनेपदी । मन्त्रिणो व्यग्रमनस्कत्वाद्वा तथोक्तिः भूषणमेवेति बोध्यम् ।

(२९) विकारादर्शनाद्विश्वस्तः काञ्चुकीयः वाक्यशेषमाह भो इत्यादि । एषा खलु इयं गुरुभिः पित्रादिभिः अभिहितनामधेयस्य कृताभिधानस्य

सैषा नो महाराजमातरं महादेवीमाश्रमस्थामभिगम्यानुज्ञाता तत्रभवत्या राजगृहमेव यास्यति। तदद्यास्मिन्नाश्रमपदे वासोऽभिप्रेतोऽस्याः । तद्भवन्तः (२९)

तीर्थोदकानि समिधः कुसुमानि दर्भान्
स्वैरं वनादुपनयन्तु तपोधनानि ।
धर्मप्रिया नृपसुता न हि धर्मपीडा-
मिच्छेत् तपस्विषु कुलव्रतमेतदस्याः॥६॥(३०)

---

अस्माकं मगधवासिनां महाराजस्य दर्शकस्य दर्शकनाम्ना प्रसिद्धस्य मगधेश्वरस्य पद्मावती नाम पद्मावतीनाम्ना प्रसिद्धा भगिनी प्रविशतीति शेषः । आश्रमस्थाम्—वार्द्धके तपश्चरणार्थमिह तपोवने स्थिताम् । अभिगम्य मिलित्वा दृष्ट्वेत्यर्थः । तत्रभवत्या पूज्यया मात्रा अभ्यनुज्ञाता पुनर्गृहं गन्तुं कृतनिदेशा सती राजगृहमेव मगधेश्वराणां तदानीन्तनीं राजधानीमेव । अस्याश्च भग्नावशेषोऽधुना राजगिरिनाम्ना प्रसिद्धः तत्प्रवेशनिमित्तमेवैपोत्सारणा यथाश्रुतग्राहिभिर्विवेकविकलैः भृत्यैः कृतेति क्षन्तव्योऽयमपराधोऽजानतामतिदयालुभिः क्षमाप्रकृतिभिस्तपस्विभिरिति पिण्डितोऽर्थः । तत् तस्मात् राजकुमार्या इहाद्य वासेऽपि भवतां कार्य्ये बाधाभावाद्धेतोरित्यर्थः । भवन्त इति श्लोकान्वयि । (२९)

(३०) तीर्थोदकानीति । भवन्तः तपोधनानि तपसे क्रियार्थं धनानीव साधनानि नपुंसकैकशेषः । तीर्थोदकानि पवित्रजलाशयजलानि तर्पणाद्यर्थानि, समिधः होमकाष्ठानि, कुसुमानि देवपूजार्थानि पुष्पाणि, दर्भान् नित्यश्राद्धाद्यर्थान् कुशांश्च वनात् स्वैरं यथेच्छम् उपनयन्तु समाहरन्तु । प्रार्थनायां लोट् । हि यतः एषा नृपसुता धर्मप्रिया धर्मः प्रियो यस्याः सा अस्ति, अत एवैषा तपस्विषु धर्मपीडां तपोबाधां न इच्छेत् न कामयेत । एतत् धर्मानुपरोधनम् अस्याः कुलव्रतं वंशपरम्परागतो नियमः । अतो भवद्भिर्यथेच्छं वर्तितव्यमित्यर्थः ॥६॥

यौगन्धरायणः—( स्वगतम् ) एवम् । एषा सा मगधराजपुत्री पद्मावती नाम, या पुष्पकभद्रादिभिरादेशिकैरादिष्टा स्वामिनो देवी भविष्यतीति । ततः (३१)

प्रद्वेषो बहुमानो वा संकल्पादुपजायते ।
भर्तृदाराभिलाषित्वादस्यां मे महती स्वता ॥७॥(३२)

वासवदत्ता—( स्वगतम् ) राअदारिअत्ति सुणिअ भइणिआसिणेहो वि मेएत्थ संपज्जइ । [ राजदारिकेति श्रुत्वा भगिनिकास्नेहोऽपि मेऽत्र संपद्यते ] (३३)

---

(३१) एवमित्यादि । एवं यथार्थमेवानेनोक्तमित्यर्थः । इयं पुष्पकभद्रादिभिः तदाख्यैः आदेशिकैः आदेशे कुशलाः, आदेशेन जीवन्ति आदेशः प्रयोजनमेषां वा ते आदेशिकाः । ठक् । तैः भविष्यद्वक्तृभिः सिद्धैराचार्य्यैः स्वामिनः वत्सराजस्योदयनस्य देवी महिषी भविष्यतीति आदिष्टा कथिता । ततः सैवैषा पद्मावतीति परिचयाद्धेतोः—श्लोकान्वयीदम् ।

(३२) प्रद्वेष इति । प्रद्वेषः विद्वेषः बहुमानो वा समादरो वा सङ्कल्पात् मनसो व्यापारात् उपजायते उत्पद्यते । ततश्चापरिचयदशायामनुचितोत्सारणाप्रवर्तिकां बुद्ध्वाऽस्यां तादृगवस्थोचितात्संकल्पात्प्रद्वेष उत्पन्न आसीत् किन्तु इदानीं तत्त्वपरिचयदशायां सत्यां मे मम भर्तुः दाराभिलाषित्वात् दारान् अभिलष्यति तच्छीलस्तस्य भावस्तत्त्वं तस्मात् । ताच्छील्ये णिनिः । इयं मे भर्तुर्महिषी भवत्वितीदृशोद्बुद्धभिन्नाकारसंकल्पवशात् अस्यां पद्मावत्यां मे महती अतिशयिता स्वता स्वशब्द आत्मीयवाची तद्भावः आत्मीयतेत्यर्थः उपजायत इत्यन्वयः । अहो स्वार्थमहिमेति भावः । अत्र 'मे' शब्दः मध्यमणिन्यायेनोभयत्राप्यन्वेति ॥ ७ ॥

(३३) राजदारिकेति । भगिनिकास्नेहः—प्राकृते स्वार्थिकः कः भगिनीस्नेह इति संस्कृतम् । अनुकम्पायां वा कः । भगिनिका प्रियभगिनी तस्यामिव स्नेहः । उभयोरावयो राजदारिकात्वेनात्र पद्मावत्यां तादृशस्नेहः

( ततः प्रविशति पद्मावती सपरिवारा चेटी च )

चेटी—एदु एदु भट्टिदारिआ, इदं अस्समपदं पविसदु। [ एत्वेतु भर्तृदारिका, इदमाश्रमपदं प्रविशतु। ] (३४)

( ततः प्रविशत्युपविष्टा तापसी ) (३५)

तापसी—साअदं राजदारिआए [स्वागतं राजदारिकायाः]

वासवदत्ता—(स्वगतम्) इअं सा राअदारिआ। अभिअणाणुरूवं खु से रूवं। [ इयं सा राजदारिका। अभिजनानुरूपं खल्वस्या रूपम्। ] (३६)

पद्मावती—अय्ये ! वंदामि। [ आर्ये ! वन्दे। ]

तापसी—चिरं जीव। पविस जादे ! पविस। तपोवणाणि णाम अदिहिजणस्स सअगेहं। [ चिरं जीव। प्रविश जाते ! प्रविश। तपोवनानि नामातिथिजनस्य स्वगेहम् ] (३७)

---

स्वाभाविक इत्यर्थः। अपि शब्दात् सपत्न्यामिव विद्वेषोऽपीत्यपि प्रतीयते किन्तु वासवदत्ताया उत्तमसाध्वीत्वेन प्रकृत्या दुस्सहस्यापि सापत्न्यविद्वेषस्य गौणत्वात् स्पष्टतयोल्लेखो न कृत इति विभावनीयम्।

(३४) चेटी प्रधानपरिचारिका। अत एव तस्या ब्राह्मणवशिष्टन्यायेन पृथक् प्रवेशोल्लेखः।

(३५) उपविष्टेति। न तु राजकुमार्य्याः स्वागतार्थं प्रत्युद्याता। स्थविर एवागच्छति प्रत्युत्थानस्य वैधत्वात् वृद्धायास्तापस्यास्तथैवौचित्यादिति भावः।

(३६) इयमिति। सा—काञ्चुकीयेन सूचितप्रवेशा राजदारिका मगधराजकुमारी, अभिजनानुरूपं—प्रशस्तवंशानुगुणम्।

(३७) चिरमित्यादि। जाते वत्से ! स्वगृहमिव तपोवनं मत्वा विश्वस्ता निश्शङ्कं प्रविशेत्यर्थः।

**पद्मावती**—भोदु भोदु । अय्ये ! विस्सत्थम्हि । इमिणा बहुमाणवअणेण अणुग्गहिदह्मि [ भवतु भवतु । आर्ये ! विश्वस्तास्मि । अनेन बहुमानवचनेनानुगृहीतास्मि ] (३८)

**वासवदत्ता**—(स्वगतम्) ण हि रूवं एव्व, वाआ वि खु से महुरा । [न हि रूपमेव, वागपि खल्वस्या मधुरा] (३९)

**तापसी**—भद्दे ! इमं दाव भद्दमुहस्स भइणिअं कोच्चि राआ ण वरेदि ? [ भद्रे ! इमां तावत् भद्रमुखस्य भगिनिकां कश्चिद्राजा न वरयति ? ] (४०)

**चेटी**—अत्थि राआ पज्जोदो णाम उज्जइणीए । सो दारअस्स कारणादो दूदसंपादं करोदि । [अस्ति राजा प्रद्योतो नामोज्जयिन्याः । स दारकस्य कारणात् दूतसंपातं करोति] (४१)

**वासवदत्ता**—(आत्मगतम्) भोदु भोदु । एसा अ अत्त-

---

(३८) भवत्वित्यादि । भवतु भवतु—अलमलं बहूपचारेण । स्वचरणकिंकर्या मम तावदेतावदेव बहु इत्यर्थः ।

(३९) पद्मावत्यास्तादृशीं विनयसम्पत्तिमवलोक्य प्रसन्ना वासवदत्ता नहीत्यादि । अस्या राजकुमार्या रूपमेव केवलं स्वरूपमात्रं नहि मधुरं किन्तु वागपि वाण्यपि मधुरा स्वाद्वी प्रिया चेत्यर्थः ।

(४०) प्रकृतौपयिकीं चर्चामवतारयति कविः तापसीत्यादिना । भद्रेति—भद्रमुखस्य प्रियवत्सस्य दर्शकस्य । किमस्याः कुतोऽपि राजकुलात् विवाहसम्बन्धचर्चा न प्रचरतीति प्रश्नः ।

(४१) प्रचरतीत्याह अस्तीत्यादि । प्रद्योतः चण्डमहासेनः वासवदत्तायाः पिता । दारकस्य निजराजकुमारस्य । दूतसम्पातं अस्या राजकुमार्या विवाहार्थं भृशं दूतप्रेषणम् ।

(४२) पूर्वोक्तां सम्बन्धचर्चां श्रुत्वा क्वास्माकं कौशाम्ब्यामस्याः सम्बन्धं घटयितुमेतावानयं समारम्भः क्व चोज्जयिन्यां तद्घटना चेति हर्षविषादा-

णीआ दाणिं संवुत्ता। [भवतु भवतु। एषा चात्मीयेदानीं संवृत्ता ] (४२)

तापसी—अहा खु इअं आइदी इमस्य वहुमाणस्य। उभआणि राअउलाणि महत्तराणि त्ति सुणीअदि। [अर्हा खल्वियमाकृतिरस्य वहुमानस्य। उभे राजकुले महत्तरे इति श्रूयते] (४३)

पद्मावती—अय्य ! किं दिट्ठो मुणिजणो अत्ताणं अणुग्गहीदुं। अभिपेदप्पदाणे तवस्सिजणो उवणिमन्तीअदु दाव को किं एत्थ इच्छदि त्ति। [आर्य ! किं दृष्टो मुनिजन आत्मानमनुग्रहीतुम्। अभिप्रेतप्रदानेन तपस्विजन उपनिमन्त्र्यतां तावत् कः किमत्रेच्छतीति।] (४४)

---

भ्यामुपहतेव वासवदत्ता स्वागतं ससंभ्रममाह—भवत्वित्यादि। भवतु भवतु मम भर्तृकुले पितृकुले वास्याः सम्बन्धः सम्पद्यतां नाम, इदानीमेषा आत्मीया भ्रातृवधूत्वेन पतिवधूत्वेन वोभयथा स्वकीया संवृत्ता जाता। ममोभयमप्यभिमतमित्याकूतम्। इदमवश्यम्भावीति भूतत्वाभिमानः।

(४३) अर्हेत्यादि। इयमलौकिकरूपशीलादिगुणसम्पन्ना आकृतिः पद्मावत्याः आकारः अस्य वहुमानस्य प्रद्योतवंशस्नुषात्वरूपस्यातिसमादरस्य अर्हा खलु योग्यैव। यतः उभये प्रद्योतदर्शककुले महत्तरे अतिप्रशस्ते। योग्यः खल्वेतयोः कुलयोरेष सम्बन्ध इत्यर्थः।

(४४) पद्मावती सलज्जेवेमां चर्चां स्थगयितुं तपोवनानुरूपं कर्मान्तरमुपक्षिपति—आर्येत्यादिना। आर्य काञ्चुकीय ! आत्मानं अनुग्रहीतुम् अनुग्राहयितुं मत्तः दीयमानयत्किञ्चित्स्वेष्टार्थस्वीकारेण मामनुगृहीतां कर्तुं कोऽपि स्वयमुपस्थितः मुनिजनः किं दृष्टः भवता लक्षितः ? अत्रानुग्राहयितुमित्येव पाठ उचितः। क दृष्टश्चेत्तर्हि कर्तव्यमाह—अभिप्रेतेति। अभिप्रेतप्रदानेन अभीप्सितार्थप्रदानोद्घोषणया। उपनिमन्त्र्यतां उपच्छन्द्यताम् अभ्यर्थ्यतामित्यर्थः उपनिमन्त्रणप्रकारमाह क इत्यादि।

काञ्चुकीयः—यदभिप्रेतं भवत्या । भो भो आश्रमवासिनस्तपस्विनः ! शृण्वन्तु शृण्वन्तु भवन्तः । इहात्रभवती मगधराजपुत्री अनेन विस्रम्भेणोत्पादितविस्रम्भा धर्मार्थमर्थेनोपनिमन्त्रयते (४५)

कस्यार्थः कलसेन, को मृगयते वासो, यथानिश्चितं
दीक्षां पारितवान् किमिच्छति पुनर्देयं गुरोर्यद्भवेत् ।

---

(४५) यदिति—भवत्या यत् अभिप्रेतम्—यदाज्ञापयति भवतीत्यर्थः । भो भोः शृण्वन्तु इत्यादरे वीप्सा । अनेन विश्रम्भेण तापसीकृतेन निश्शङ्कस्वरूपेण विश्वासेन उत्पादितविस्रम्भा जनितविश्वासा, तपोवनं नामातिथिजनस्य स्वगेहमितिबहुमानेन निश्शङ्केत्यर्थः । धर्मार्थमर्थेन धर्मक्रियौपयिकवस्तुना उपनिमन्त्रयते अभ्यर्थयते ।

(४६) तदेव विशदयति—कस्येति । कस्य कलशेन कमण्डलुना अर्थ-प्रयोजनम् ? कलशं क इच्छतीत्यर्थः कः वासः वस्त्रं कौपीनादि मृगयते अन्विष्यति वाञ्छति ? पुनः किञ्च यथानिश्चितं अधीत्य वेदं वेदौ वेत्याद्युक्तनियममनतिक्रम्य संकल्पानुगुणं क्रियाकलापं परिपाल्येत्यर्थः । याथार्थ्येऽव्ययीभावः । दीक्षां ब्रह्मचर्य्यपूर्वकं स्वाध्यायव्रतं पारितवान् समापितवान् स्नास्यन् स्नात्वा गृहस्थाश्रमं प्रविविक्षुरित्यर्थः । "स्नास्यंस्तु गुरुणाज्ञप्तः शक्त्या गुर्वर्थमाहरेत्" इति मनूक्तेः तथोक्तः कः यत् गुरोः शेषत्वविवक्षया षष्ठी । गुरवे देयं भवेत् दक्षिणारूपतया आहरणीयं स्यात् तत् किं हिरण्यादि वस्तु इच्छति ? (यतः) धर्माभिरामप्रिया ये धर्मे अभिरमन्ते अथवा धर्मे अभिरामः अभिरतिः अत्युद्रिक्ताभिरुचिः येषां ते सदा धर्मानुष्ठानप्रसक्ताः धर्मसर्वस्वास्तपस्विनः प्रियाः यस्याः सा नृपजा राजकुमारी इह अत्र तपोवने आत्मानुग्रहं दत्तस्वेप्सितवस्तुस्वीकारेण तपस्विभिः कृतां आत्मनः कृतार्थताम् इच्छति अतः न केवलं पूर्वमुद्घोषितं वस्त्वेव किन्तु यस्य यत् समीप्सितं वाञ्छितं भवेत् । तत् स वदतु । प्रार्थनायां लोट् । स ममेदमिदं वस्त्वावश्यकमिति कृपया

आत्मानुग्रहमिच्छतीह नृपजा धर्माभिरामप्रिया
यद्यस्यास्ति समीप्सितं वदतु तत्
कस्याद्य किं दीयताम् ॥८॥ (४६)

यौगन्धरायणः—हन्त दृष्ट उपायः। (प्रकाशम्) भोः। अहमर्थी (४७)

पद्मावती—दिट्ठिआ सहलं मे तवोवणाभिगमणं। [दिष्ट्या सफलं मे तपोवनाभिगमनम्] (४८)

तापसी—संतुट्ठतपस्सिजणं इदं अस्समपदं। आअंतुएण इमिणा होदव्वं। [संतुष्टतपस्विजनमिदमाश्रमपदम्। आगन्तुकेनानेन भवितव्यम्] (४९)

काञ्चुकीयः—भोः! किं क्रियताम्? (५०)

---

आज्ञापयतु। अद्य कस्य कस्मै किं दीयताम्? भवद्भिराज्ञापने एव विलम्बः न तु तया दानेऽवसरप्रतीक्षेत्यर्थः। अत्र स ईप्सितमित्येव पाठः श्रेयान्। रुत्वयत्वयलोपाः सोऽचीति तु पादपूरण एव प्रवर्तते इति नात्रास्यावसरः ॥८॥

(४७) हन्तेत्यादि। (स्वगतम्) हन्त हर्षे अहोभाग्यम्! उपायः स्वाभिमतस्य वासवदत्तनिक्षेपलक्षणस्य कार्यस्य मार्गः तदभ्यर्थनावसर इति यावत् दृष्टः उपलब्धः। अर्थी याचकः।

(४८) दिष्ट्येत्यादि। दिष्ट्या अहोभाग्यम्। मम तपोवनाभिगमनं इहाद्य यावत्कस्याप्यर्थिनोऽनुपस्थित्या विफलतोन्मुखमपि अद्य कस्यचिदेकस्याप्यर्थिनो लाभात्सफलं सार्थकमभूदित्यहोभाग्यमित्यर्थः।

(४९) सन्तुष्टेत्यादि। इदमाश्रमपदम् एतत्तपोवनं सन्तुष्टतपस्विजनं सन्तुष्टा अनायासलभ्यैर्वन्यैरभिमतार्थैरेव परितृप्ताः तदर्थं परमुखापेक्षापराङ्मुखाः तपस्विजना यत्र तथोक्तम् नात्र केऽपि किमपि कमपि याचन्त इत्यर्थः। आगन्तुकेन कुतोऽप्यन्यस्थानादिहाद्यैवागतेन।

(५०) भो इति। किं क्रियतां भवतोऽभीप्सितः कोऽर्थः सम्पाद्यताम्?

यौगन्धरायणः—इयं मे स्वसा । प्रोषितभर्तृकामिमा-
मिच्छाम्यत्रभवत्या कंचित् कालं परिपाल्यमानाम् । कुतः (५१)

कार्यं नैवार्थैर्नापि भोगैर्न वस्त्रै-
र्नाहं काषायं वृत्तिहेतोः प्रपन्नः ।
धीरा कन्येयं दृष्टधर्मप्रचारा
शक्ता चारित्रं रक्षितुं मे भगिन्याः ॥६॥(५२)

---

(५१) इयमित्यादि । स्वसा भगिनी । प्रोषितभर्तृकां प्रोषितः किमप्य-विज्ञातं देशं गतः भर्ता यस्याः ताम् । नद्यृत इति कप् । अत्रभवत्या मान-नीययानया राजकुमार्य्या कञ्चित्कालं यावदहं तं कुतोऽप्यन्विष्य प्रत्यानयामि तावत्कालपर्यन्तम् । अत्यन्तसंयोगे द्वितीया । परिपाल्यमानां निजसविधे संस्थाप्य रक्ष्यमाणाम् । अत्रैवमनृतभाषणं न पापजनकम् । "न नर्मयुक्तं वचनं हिनस्ति न स्त्रीषु राजन्न विवाहकाले । प्राणात्यये सर्वधनापहारे पञ्चा-नृतान्याहुरपातकानि ।" इति महाभारतवचनात् । अत्र विपक्षारुणिकृत-बहुतरवत्सराज्यापहारस्य स्पष्टत्वात् । पुनः प्रत्यावर्तनेन तद्रक्षार्थमेवैवं वासवदत्तानिक्षेपस्य कर्तव्यत्वात् । विस्तरस्त्वेतद् भूमिकातोऽवसेयः । अत्र कुतः इति पदं यत इत्यर्थकं श्लोकान्वयि ।

(५२) कार्य्यमिति । यतः ( मम ) अर्थैः धनैः नैव कार्यं नहि प्रयो-जनम् । नापि भोगैः न वा वस्त्रैः कार्यमस्ति अहं वृत्तिहेतोः जीविकार्थं काषायं कषायेण गैरुकेण धातुना रक्तं वसनं 'तेन रक्तमित्यण्' तादृशं संन्यासलिङ्गं न प्रपन्नः स्वीकृतवान् अयाचितसुलभैर्वन्यैः फलवल्कलादिभिरेव तन्निर्वाहसिद्धेरिति भावः । किन्तु दृष्टः धर्मप्रचारो यस्याः सा धीरा च चारित्र-रक्षणसमर्थगुणसम्पन्नेत्यर्थः । इयं कन्या मगधराजकुमारी मे मम भगिन्याः चारित्रं स्वार्थेऽण् सतीत्वादि शीलं रक्षितुं शक्ता समर्था अतस्तदे-वाहं प्रार्थये भवत्या एष एव ममाभीप्सितोऽर्थः सम्पाद्यताम् इत्यर्थः ॥९॥

वासवदत्ता—(आत्मगतम्) हं इह मं णिक्खिविदुकामो अय्ययोगंधरायणो। होदु, अविआरिअ कमं ण करिस्सदि। [हम् इह मां निक्षेप्तुकाम आर्ययौगन्धरायणः। भवतु, अविचार्य क्रमं न करिष्यति। (५३)

काञ्चुकीयः—भवति! महती खल्वस्य व्यपाश्रयणा। कथं प्रतिजानीमः? कुतः, (५४)

सुखमर्थो भवेत् दातुं सुखं प्राणाः सुखं तपः।
सुखमन्यद्भवेत् सर्वं दुःखं न्यासस्य रक्षणम् ॥१०॥ (५५)

1969

पद्मावती—अय्य पढमं उग्घोसिअ को किं इच्छदित्ति अजुत्तं दाणिं विआरिदुं। जं एसो भणादि, तं अणुचिट्ठदु अय्यो। [आर्य! प्रथममुद्‍घोष्य कः किमिच्छतीत्ययुक्तमिदानीं

---

(५३) हमित्यादि। हमिति भये वितर्के प्रश्ने विमर्शे वाऽव्ययम्। हुम् इत्येव पाठे भवेत्। 'हुं वितर्के परिप्रश्ने' इत्यमरः। हुं किम् इह पद्मावत्यां मां निक्षेप्तुकामः निक्षेप्तुं न्यासविधया स्थापयितुं कामः यस्य सः। तुं काममनसोरपीति मलोपः। क्रमं विधिं नियोगमिति यावत्। कम्मं (कर्म) इति पाठो भवेत्। कार्यमिति तदर्थः।

(५४) भवतीत्यादि। भवति राजपुत्रि! महती गुर्वी कष्टसम्पाद्या। व्यपाश्रयणा आश्रयभिक्षा। वि-अप-आ-श्रि-युच् स्त्रियां भावे बाहुलकात्। प्रतिजानीमः सम्पादयितु स्वीकुर्मः? कुत इति पूर्ववत्।

(५५) सुखमिति। यतः अर्थः धनं सुखं अनायासं दातुं भवेत्। अस्त्यर्थोपपदे शकेत्यादिना तुमुन् एवं प्राणाः तपोऽपि। किम्बहुना अन्यत् सर्वं सुखं दातुं भवेत्। किन्तु न्यासस्य निक्षेपस्य रक्षणं दुःखं कष्टसम्पाद्यं तन्न कथमपि सम्पादयितुं शक्यमित्यर्थः॥ १०॥

विचारयितुम्। यदेष भणति, तदनुतिष्ठत्वार्यः ] (५६)

काञ्चुकीयः—अनुरूपमेतद्भवत्याभिहितम्। (५७)

चेटी—चिरं जीवदु भट्टिदारिआ एवं सच्चवादिणी। [ चिरं जीवतु भर्तृदारिकैव सत्यवादिनी ] (५८)

तापसी—चिरं जीवदु भद्दे ! [चिरं जीवतु भद्रे !] (५९)

काञ्चुकीयः—भवति, तथा। (उपगम्य) भोः! अभ्युपगतमत्रभवतो भगिन्याः परिपालनमत्रभवत्या। (६०)

यौगन्धरायणः—अनुगृहीतोऽस्मि तत्रभवत्या। वत्से, उपसर्पात्रभवतीम्।

वासवदत्ता—( आत्मगतम् ) का गई। एसा गच्छामि मंदभाआ। [ का गतिः। एषा गच्छामि मन्दभागा ] (६१)

---

(५६) आर्येति। विचारयितुं सुकरं दुष्करं वेति विभावयितुम्। अनुतिष्ठतु प्रतिजानातु।

(५७) अनुरूपं स्वधर्माद्यनुगुणम्। एतत् प्रतिज्ञातस्य विषयस्य सर्वथा पालनम्।

(५८) चिरमित्यादि। एवं सत्यवादिनी—प्रतिज्ञातं शक्याशक्यविचारपरिहारेणावश्यमनुष्ठातव्यमेवेति तथ्यभाषिणी।

(५९) सत्यनिष्ठां दृष्ट्वा आशास्ते तापसी चिरमिति। चिरं जीवतु भद्रे! भद्रे कल्याणिनि राजदारिके। भवती चिरं जीवतु।

(६०) अभ्युपगतं—स्वीकृतम्।

(६१) का गतिरिति—का गतिः! गत्यन्तराभावादिदानीमेवं कर्तुमापतितमेवेत्यर्थः। मन्दभागा—मन्दः अल्पः भागः भाग्यं यस्यास्तथाभूता। भागो रूप्यार्द्धके भाग्यैकदेशयोरिति हैमः। परिविच्छेददुःखान्या मम यष्टिवदवलम्बनस्यामात्यस्य विच्छेदोऽपीदानीं जात इत्यहो मे दौर्भाग्यमिति भावः।

पद्मावती—भोदु भोदु । अत्तणीआ दाणिं संवुत्ता । [भवतु भवतु । आत्मीयेदानीं संवृता ] (६२)

तापसी—जो ईदिसी से आइदी, इयं वि राअदारिअत्ति तक्केमि । [या ईदृश्यस्या आकृतिः, इयमपि राजदारिकेति तर्कयामि ] (६३)

चेटी—सुट्ठु अय्या भणादि । अहं वि अणुहूदसुहत्ति पेक्खामि । [सुष्ठु आर्या भणति । अहमपि अनुभूतसुखेति पश्यामि ] (६४)

यौगन्धरायणः—( आत्मगतम् ) हंत भोः । अर्धमवसितं

---

(६२) विषण्णामिवोपसर्पन्तीमाश्वासयति—भवत्विति । भवतु भवतु—अलमलं खेदेन । भवतीदानीं ममात्मीया सम्पन्ना । आत्मीया सन्निधावात्मीया याः कः खेदावसरः ? स्वगृहनिर्विशेषमत्रभवतो तिष्ठत्वित्यर्थः ।

(६३) येत्यादि । ( यतः ) या दृश्यमाना । अस्याः आकृतिः मूर्तिः ईदृशी—साधारणकन्याजनासुलभसौष्ठवशीलादिगुणसम्पन्ना । ( ततः ) इयमपि राजदारिकेति तर्कयामि । ततश्च समानशीलव्यसनेषु सख्यमिति न्यायेनानयोः राजकन्ययोरन्योन्यं सखीत्वस्य संभवादस्याः सन्निधावस्याः सख्या इव वासः सर्वथा सुखकर एवेत्याशयः । अत्र 'ज' इति पाठो भवेत् । ( यत्—यत् इत्यर्थः अथवा जा इति यावदव्ययस्य रूपम् । यावत् साकल्ये । यावदीदृशी साकल्येन सर्वाङ्गसौष्ठववतीत्यर्थः ।

(६४) चेट्यपि तदेवानुमोदते सुट्ठिति । अनुभूतसुखा—अनुभूतम् उपभुक्तं सुखं राजकन्यासुलभं सौख्यं यया तथोक्ता ।

(६५) हन्तेत्यादि । हन्त भो इत्यन्याश्वासजानन्दद्योतकमव्ययद्वयम् । अर्द्धमवसितं भारस्य विपक्षापहृतस्य स्वामिराज्यस्य प्रत्यावर्त्तनं भारः, स च स्वामिना सह पद्मावतीपरिणयसंघटनकारणकः, परिणयोऽपि अपसारण-

भारस्य । यथा मन्त्रिभिः सह समर्थितं, तथा परिणमति । ततः प्रतिष्ठिते स्वामिनि तत्रभवतीमुपनयतो मे इहात्रभवती मगधराजपुत्री विश्वासस्थानं भविष्यति । (६५)

कुतः । (६६)

पद्मावती नरपतेर्महिषी भवित्री
दृष्टा विपत्तिरथ यैः प्रथमं प्रदिष्टा ।

---

पूर्वकं क्वचिदास्ते वासवदत्तान्यसननिबन्धनः । एष च भारो यौगन्धरायणेन गृहीतः । तत्र च वासवदत्ताया अपसारणपूर्वकं पद्मावतीहस्ते न्यसनमर्धस्वरूपमवसितं समाप्तं लब्धस्तावत् कियानाश्वास इत्यर्थः । यथा यादृशं मन्त्रिभिः रुमण्वदादिभिः सह समर्थितं स्थिरीकृतं तथा तादृशमेव परिणमति सम्पद्यते । ततः अस्मादेव कारणकलापात्स्वामिना सह पद्मावत्याः परिणयाद्यनन्तरं स्वामिनि वत्सराज्ये प्रतिष्ठिते सहायसम्पत्त्या शत्रुहृतराज्यांशं प्रत्यावर्त्य तत्रापि पुनाराज्यपदमधिष्ठिते तत्रभवतीं वासवदत्ताम् उपनयतः प्रगटीकृत्योपहरतः मे इह वासवदत्तायाम् अत्रभवती मान्या मगधराजपुत्री—स्वामिना परिणीता पद्मावती विश्वासस्थानं विश्वासस्य इयं सुरक्षितचारित्रेति विस्त्रंभस्य स्थानम् आश्रयः—साक्षिभूता भविष्यति । अनेन चैतन्नाटकीयं समस्तमितिवृत्तं सूचितम् ।

(६६) ननु वत्सराजस्य पद्मावत्या परिणयो भविष्यत्येवात्रैव कः प्रत्ययः येनेदृशशङ्कास्पदमकार्यं त्वया कृतमिति चोद्यं परिहरति कुत इत्यादिना । कुत इति यत इत्यर्थकं श्लोकान्वयि ।

(६७)पद्मावतीति।यतः यैः सिद्धैः पुष्पभद्रकप्रभृतिभिः प्रथमं पूर्वं भवित्री भाविनी विपत्तिः शत्रुकृतराज्यांशापहाररूपा विपत् प्रदिष्टा कथिता दृष्टा अस्माभिः प्रत्यक्षीकृता । अथ अनन्तरं तादृशविदुपनिपातात् परं पश्चादिति यावत् । पद्मावती—मगधराजकुमारी नरपतेः वत्सराजस्य भवित्री भाविनी महिषी पत्नी प्रदिष्टा तैरेव सिद्धैः कथिता तत्प्रत्ययात् तेषु सिद्धेषु

तत्प्रत्ययात् कृतमिदं न हि सिद्धवाक्या-
न्युत्क्रम्य गच्छति विधिः सुपरीक्षितानि ॥११॥(६७)

( ततः प्रविशति ब्रह्मचारी ) (६८)

ब्रह्मचारी— (ऊर्ध्वमवलोक्य) स्थितो मध्याह्नः। दृढमस्मि परिश्रान्तः। अथ कस्मिन् प्रदेशे विश्रमयिष्ये। (परिक्रम्य) भवतु, दृष्टम्। अभितस्तपोवनेन भवितव्यम्। (६९) तथाहि—

---

प्रत्ययात्—तेषां सिद्धः प्रथमादेश इवैष द्वितीयोऽप्यादेशोऽवश्यं सेत्स्यत्येवेति विश्वासात् इदं पद्मावत्या हस्ते वासवदत्ताया न्यसनं कृतं द्वितीयादेशसिद्धावौपयिकमवधार्य मयाऽचरितम्। युक्तं चैतदिति समर्थयते नहीति। हि यतः विधिः दैवं सुपरीक्षितानि बहुशस्तत्र तत्र सम्यक् प्रत्यक्षीकृतानि सिद्धवाक्यानि उत्क्रम्य उल्लङ्घ्य न गच्छति अपितु सर्वथा तान्यनुगच्छत्येव अवश्यं तदनुसारं फलमुत्पादयत्येवेत्यर्थः। ततश्चाद्ये मदीये तथाचरिते परस्ताच्च स्वामिपत्न्या विश्वासभूमेः पद्मावत्यास्तथा साक्ष्याशायां च न कोऽपि शङ्कावसर इति भावः। "ऋषीणां पुनराद्यानां वाचमर्थोऽनुधावति" इति भवभूतिः ॥११॥

(६८) अथ प्रियावियुक्तोदयनदशावर्णनेन भाविपरिणयौपयिकं पद्मावत्या हृदये वत्सराजविषयकमनुरागबीजं वप्तुं पतिविरहविधुरां वासवदत्ताञ्चाश्वासयितुं तदनुगुणं पात्रं प्रवेशयति कविः—ततः प्रविशति ब्रह्मचारीति।

(६९) मध्याह्नः स्थितः—ललाटन्तप इदानीं सूर्य इत्यर्थः। दृढं—अत्यन्तम्। परिश्रान्तः पथश्रमक्लान्तः। विश्रमयिष्ये—विश्रम्यात्मानं विगतक्लमं करिष्ये। दृष्टं विश्रामयोग्यं स्थानमुपलब्धम्। अभितः परितः सर्वथेत्यर्थः सन्निकृष्टे न वा। 'समीपोभयतः शीघ्रसाकल्याभिमुखेऽभितः' इत्यमरः।

विस्रब्धं हरिणाश्चरन्त्यचकिता देशागतप्रत्यया
वृक्षाः पुष्पफलैः समृद्धविटपाः सर्वे दयारक्षिताः
भूयिष्ठं कपिलानि गोकुलधनान्यक्षेत्रवत्यो दिशो
निः संदिग्धमिदं तपोवनमयं धूमो हि बह्वाश्रयः॥१२॥७०

यावत् प्रविशामि। (प्रविश्य) (७१) अये आश्रमविरुद्धः खल्वेष

---

(७०) विस्रब्धमिति। यतोऽत्र देशागतप्रत्ययाः—देशात् हेतोः तपोवनप्रदेशेऽत्र न कुतोऽपि किमपि भयमिति कृत्वा आगतः सञ्जातः प्रत्ययः विश्वासः येषान्ते तथोक्ताः अत एव अचकिताः अपरिचितजनसन्निधावपि असंभ्रान्ताः हरिणाः मृगाः विस्रब्धं निश्शङ्कं चरन्ति इतस्ततो विहरन्ति तृणानि खादन्ति वा। "विश्वासोपगमादभिन्नगतयः शब्दं सहन्ते मृगाः" इति शाकुन्तले। सर्वे वृक्षाः दयारक्षिताः दयया वात्सल्येन रक्षिताः अत एव पुष्पफलैः पुष्पसहितैः फलैः समृद्धाः सम्पन्नाः विटपाः शाखाः येषां ते तथाभूताः। कपिलानि कापिलप्रायाणि। होमे तद्दुग्धानां प्राशस्त्यादिति भावः। गोकुलधनानि तपोधनानां धनानीव होमसाधनानि गोकुलानि होमधेनुयूथानि भूयिष्ठं बहुलतया चरन्तीत्यनुवृत्यान्वयः। दिशः परिसरप्रदेशाश्च अक्षेत्रवत्यः—क्षेत्राणि कृष्टभूमयः न सन्ति यासु तथोक्ताः कृष्यर्थं कृष्टा भूमिरत्र परितो न विद्यत इत्यर्थः। अयं धूमो हि धूमश्च बह्वाश्रयः बहवः माध्याह्निके होमे वह्नौ हुतास्तिलयवघृतादयः आश्रयाः यस्य तथोक्तः तत्तद्गन्धीत्यर्थः आघ्रीयत इति शेषः। अत एव निःसन्दिग्धम् इदं तपोवनम्। अस्य तपोवनत्वे सन्देहाभावादिदमेव ब्रह्मचारिणो मम विश्रामयोग्यं स्थलमित्यर्थः॥१२॥

(७१) प्रविश्येत्यादि। प्रविश्यावलोक्य च। अये! शङ्कायाम्। आश्रमविरुद्धः नागरिकवेषत्वात्तपोवनायोग्यः खलु एष जनः पुरतो दृश्यमानः काञ्चकीयः। नात्र मया प्रवेष्टव्यमित्यर्थः। तपस्विजनोऽप्यत्र तापसी संन्यासी

जनः । ( अन्यतो विलोक्य ) अथवा तपस्विजनोऽप्यत्र । निर्दोष-मुपसर्पणम् । अये ! स्त्रीजनः । (७१)

काञ्चुकीयः—स्वैरं स्वैरं प्रविशतु भवान् । सर्वजनसाधा-रणमाश्रमपदं नाम (७२)

वासवदत्ता—हं । (७३)

पद्मावती—अम्मो परपुरुसदंसणं परिहरदि अय्या । भोदु, सुपरिवालणीओ खु मण्णासो । [ अम्मो परपुरुषदर्शनं परिहर-त्यार्या । भवतु, सुपरिपालनीयः खलु मन्न्यासः । ] (७४)

काञ्चुकीयः—भोः ! पूर्वं प्रविष्टाः स्मः । प्रतिगृह्यतामतिथि-सत्कारः । (७५)

ब्रह्मचारी—(आचम्य) भवतु भवतु । निवृत्तपरिश्र-मोऽस्मि । (७६)

---

चात्र दृश्यते । निर्दोषम् अदुष्टमुपसर्पणम् एषां समीपे मम गमनम् । अये स्त्रीजनः पद्मावत्यादिः । ततश्च न प्रवेष्टव्यमित्यर्थः ।

(७२) स्वैरमिति । स्वैरं स्वच्छन्दं निश्शङ्कमित्यर्थः । आदरे वीप्सा । नात्रस्त्रीपुंसभिदेत्यर्थः ।

(७३) हमिति । हा धिक् परपुरुषोऽत्र प्रविशतीत्यर्थः ।

(७४) अम्मो इत्यादि । अम्मो इत्यानन्दे । एष मन्न्यासः मयि न्यस्तः अर्थिभगिनीरूपः सुपरिपालनीयः सुखेनानायासेन पालयितुं शक्यः । ब्रह्मचारिण्यपि दृष्टे परिहारेच्छादर्शनादिति भावः ।

(७५) भो इत्यादि । पूर्वं भवदागमात्प्रथमं वयमत्रागताः स्म तद्वयम-त्रत्या इव सम्वृत्ता इत्यस्माकमप्यत्रोपस्थितानामतिथीनां पूजा वैधीत्यस्माभिः क्रियमाणोऽतिथिसत्कारः श्रीमता स्वीक्रियतामित्यर्थः ।

(७६) आचम्येत्यादि । यद्यप्येषां पूर्वं प्रविष्टत्वमात्रेणैषसमुदाचारो न वैधस्तथाप्येते धर्मभीरवो विमनसो मा भूवन्निति तदुपहृतजलेनाचमन-

**यौगन्धरायणः**—भोः! कुतः आगम्यते, क्व गन्तव्यं, क्वाधिष्ठानमार्यस्य। (७७)

**ब्रह्मचारी**—भोः! श्रूयताम्। राजगृहतोऽस्मि। श्रुतिविशेषणार्थं वत्सभूमौ लावाणकं नाम ग्रामस्तत्रोषितवानस्मि। (७८)

**वासवदत्ता**—(आत्मगतम्) हा लावाणअं णाम। लावाणअसंकित्तणेण पुणो णवीकिदो विअ मे सन्दावो। [हा लावाणकं नाम। लावाणकसंकीर्तनेन पुनर्नवीकृत इव मे संतापः] (७९)

**यौगन्धरायणः**—अथ परिसमाप्ता विद्या। (८०)

**ब्रह्मचारी**—न खलु तावत्। (८१)

---

मात्रं कृत्वेत्यर्थः। भवतु भवतु—अलमलं बहूपचारेण। एतावतैवाहं विगतपथक्लमः सम्वृत्तोऽस्मीत्यर्थः।

(७७) अधिष्ठानं—निवासभूमिः।

(७८) भो इत्यादि। राजगृहतोऽस्मि राजगृहादागतोऽस्मीत्यर्थः। 'अपादाने चाहीयरुहोः' रिति तत आगत इत्यर्थे तसिः। श्रुतिविशेषणार्थं श्रुतेः वेदशास्त्रस्य विशेषणं विशिष्टज्ञानसम्पादनं तदर्थं विशिष्य विद्याध्ययनार्थमित्यर्थः। वत्सभूमौ वत्सराज्ये। उषितवानस्मि पूर्वं कञ्चित्कालं प्रवासिविधया कृतनिवासोऽस्मि।

(७९) हेत्यादि। हा कष्टम्। लावाणकसंकीर्तनेन लावाणकेति नामोल्लेखेन। मे मम सन्तापः पूर्वंप्रवासारम्भसमयेऽनुभूतः। प्रियतमवत्सराजविरहजनितः परितापः। लावाणकग्राम एव तस्यारम्भादिति भावः। पुनः नवीकृत इव सद्योजात इव दुस्सहः सम्पादितः।

(८०) अथेति। अथ प्रश्ने किमित्यर्थः।

(८१) नेति। नैव परिसमाप्तेदानीं यावत् इत्यर्थः।

यौगन्धरायणः—यद्यनवसिता विद्या, किमागमनप्रयोजनम्। (८२)

ब्रह्मचारी—तत्र खल्वतिदारुणं व्यसनं संवृत्तम्। (८३)

यौगन्धरायणः—कथमिव। (८४)

ब्रह्मचारी—तत्रोदयनो नाम राजा प्रतिवसति। (८५)

यौगन्धरायणः—श्रूयते तत्रभवानुदयनः। किं सः। (८६)

ब्रह्मचारी—तस्यावन्तिराजपुत्री वासवदत्ता नाम पत्नी दृढमभिप्रेता किल। (८७)

---

(८२) यदीति। अनवसिता अपरिसमाप्ता। यदि न समाप्ता विद्या तर्हि केन निमित्तेन लावाणकं परित्यज्येहप्रत्यागतो भवानित्यर्थः।

(८३) तत्रेत्यादि। तत्र खलु—लावाणकग्रामे एव अतिदारुणं घोरम् अतीव दुस्सहं व्यसनं विपत्—दुःखं सम्वृत्तं जातम्। तदेव तत्त्यागे कारणमित्यर्थः।

(८४) कथमिव—कीदृशं व्यसनं संजातम्?

(८५) तत्र—लावाणकग्रामे प्रतिवसति—मृगयार्थमागत्येदानीं तत्र वासं कृतवानस्ति।

(८६) श्रूयते इत्यादि। श्रूयते—अस्माभिरप्याकर्ण्यते प्रसिद्धः स इत्यर्थः। किं सः? स उदयनः किम्? व्यसनप्रस्तावात्तस्योल्लेखाच्च 'व्यसनं प्राप्तवान्' इति वाक्यशेषोऽमङ्गलत्वान्न प्रयुक्तः। किं तस्यैव विषये भवदुक्तं किमपि व्यसनं सम्वृत्तमित्यर्थः। अथवा स किं (करोति?) तस्येदानीं किंवृत्तमिति प्रष्टुराशयः। यद्वा किंसः इत्येकं पदम्। किं वृत्तं यस्य सः किम्वृत्तश्चासौ स च किंसः। मध्यमपदलोपिसमासः। कीदृक्समाचारः स इति प्रश्नार्थः।

(८७) तस्येति। दृढमभिप्रेता किल—अतीव वल्लभेति प्रसिद्धा। किलेति वार्त्तायाम्।

**यौगन्धरायणः**—भवितव्यम्। ततस्ततः।

**ब्रह्मचारी**—ततस्तस्मिन् मृगयानिष्क्रान्ते राजनि ग्रामदाहेन सा दग्धा। (८८)

**वासवदत्ता**—(आत्मगतम्) अलिअं अलिअं एदं। जीवामि मंदभाआ। [अलीकमलीकमेतत्। जीवामि मन्दभागा]। (८९)

**यौगन्धरायणः**—ततस्ततः ?

**ब्रह्मचारी**—ततस्तामभ्यवपत्तुकामो यौगन्धरायणो नाम सचिवस्तस्मिन्निवाग्नौ पतितः। (९०)

**यौगन्धरायणः**—सत्यं पतित इति। ततस्ततः। (९१)

**ब्रह्मचारी**—ततः प्रतिनिवृत्तो राजा तद्वृत्तान्तं श्रुत्वा तयोर्वियोगजनितसंतापस्तस्मिन्नेवाग्नौ प्राणान् परित्यक्तुकामोऽमात्यैर्महता यत्नेन वारितः। (९२)

---

(८८) तत इति। मृगयानिष्क्रान्ते—मृगयार्थं वासान्निर्गते सति।

(८९) अलीकमलीकं—सर्वथा मिथ्या। दार्ढ्ये वीप्सा।

(९०) तत इति। अभ्यवपत्तुकामः तादृशे व्यसने साहाय्यं कर्तुमिच्छुः। 'अभ्युपपत्तिरनुग्रह' इत्यमरोक्तेः अभ्युपपत्तिपर्यायोऽभ्यवपत्तिशब्दः। "व्यसनसाहाय्यमभ्यवपत्ति" रिति कौटिल्यः। पतितः प्रविष्टः दग्धश्च।

(९१) (स्वगतम्) सत्यं पतित इति। अहमग्नावपतितोऽपि पतित इत्यनेन यदुक्तं तत्सत्यमेव अहमवश्यं पतितः नीचः दयाधर्माच्च्युतः योहि चक्रवाकयोरिव स्निग्धयोर्दम्पत्योरेवं विरहं व्यधत्तेति पतितशब्दार्थं लक्ष्यीकृत्य निर्विण्णस्यामात्यस्यात्मगतोक्तिः। पूर्वार्थोऽपि बोध्यः। यथाश्रुतपाठोऽपि व्यङ्ग्यः।

(९२) तत इति। तयोः प्रियतमयोर्महिषीसचिवयोर्वियोगेन जनितसन्तापो यस्य तथोक्तः। अमात्यैः रुमण्वदादिभिः।

वासवदत्ता—(आत्मगतम्) जाणामि जाणामि अय्यउत्तस्य मइ साणुक्कोसत्तणं। [ जानामि जानाम्यार्यपुत्रस्य मयि सानुक्रोशत्वम् ] ( ९३ )

यौगन्धरायणः—ततस्ततः।

ब्रह्मचारी—ततस्तस्याः शरीरोपभुक्तानि दग्धशेषाण्याभरणानि परिष्वज्य राजा मोहमुपगतः। ( ९४ )

सर्वे—हा !

वासवदत्ता—( स्वगतम् ) सकामो दाणिं अय्य जोअंधराअणो होदु। [ सकाम इदानीमार्ययौगन्धरायणो भवतु ] (९५)

चेटी—भट्टिदारिए, रोदिदि खु इअं अय्या [ भर्तृदारिके, रोदिति खल्वियमार्या ] (९६)

पद्मावती—साणुक्कोसाए होदव्वं। [ सानुक्रोशया भवितव्यम् ] (९७)

---

(९३) जानामीति। सानुक्रोशत्वं—सदयत्वम् लोकोत्तरप्रणयनिबन्धनदयालुत्वम्। मयि सोऽतितरां स्निह्यतीत्यर्थः।

(९४) तत इति। तस्याः वासवदत्तायाः। शरीरोपभुक्तानि—देहे धारितानि दग्धशेषाणि—दग्धेभ्यः शेषाणि कथंचिदेकदेशदग्धानि। परिष्वज्य आश्लिष्य। प्रियजनस्पृष्टस्पर्शो हि विरहयापनोपाय इति तथोक्तिः। मोहं मूर्च्छाम्।

(९५) सकाम-इत्यादि। सकामः—पूर्णमनोरथः। तदुत्पादित एवायमनर्थ इत्युपालम्भोक्तिः। अतः परं साश्रुनेत्रा भवतीत्यपि पूरणीयम्। रोदिति, इत्युत्तरवाक्यानुरोधात्।

(९६) इयमार्य्या अर्थिभगिनी।

(९७) सानुक्रोशया—स्त्रीजनप्रकृतित्वात्परदुःखदुःखितया।

**यौगन्धरायणः**—अथकिमथकिम्। प्रकृत्या सानुक्रोशा मे भगिनी। ततस्ततः। (९८)

**ब्रह्मचारी**—ततः शनैःशनैः प्रतिलब्धसंज्ञः संवृत्तः। (९९)

**पद्मावती**—दिट्ठिआ धरइ, मोहं गदो त्ति सुणिअ सुण्णं विअ मे हिअअं। [ दिष्ट्या ध्रियते। मोहं गत इति श्रुत्वा शून्यमिव मे हृदयम् ] (१००)

**यौगन्धरायणः**—ततस्ततः ?

**ब्रह्मचारी**—ततः स राजा महीतलपरिसर्पणपांसुपाटलशरीरः सहसोत्थाय 'हा वासवदत्ते ! हा अवन्तिराजपुत्रि ! हा प्रिये ! हा प्रियशिष्ये !' इति किमपि किमपि बहु प्रलपितवान्। किं बहुना (१०१)

---

(९८) अथकिमथकिम्—एवमेव। शङ्कान्तरभिया त्वरया द्विरुक्तिः। प्रकृत्या स्वभावतः।

(९९) प्रतिलब्धसंज्ञः प्रतिलब्धा पुनराप्ता संज्ञा चेतना येन तथोक्तः। पुनरुपगतचेतन इत्यर्थः।

(१००) दिष्ट्येति। ध्रियते जीवति प्राणितीत्यर्थः। शून्यमिव अचेतनमिव। अनयोक्त्या राजनि पद्मावत्या अपि श्रवणानुरागसंचारः सूचितः।

(१०१) तत इत्यादि। महीतलपरिसर्पणपांसुपाटलशरीरः—महीतले भूपृष्ठे परिसर्पणेन परिलुंठनेन पांशुभिः धूलिभिः पाटलं धूसरं शरीरं यस्य सः। प्रियशिष्ये ललिते वीणावादनादिकलाविधौ प्रियान्तेवासिनि। किं बहुना वासवदत्ताविरहविधुरस्योदयनस्य दुरवस्थां कियत् पर्य्यन्तं वर्णयामि संक्षेपत एव श्रृणुतेत्यर्थः।

नैवेदानीं तादृशाश्चक्रवाका
नैवाप्यन्ये स्त्रीविशेषैर्वियुक्ताः ।
धन्या सा स्त्री यां तथा वेत्ति भर्ता
भर्तृस्नेहात् सा हि दग्धाप्यदग्धा ॥१३॥(१०२)

**यौगन्धरायणः**—अथ भोः ! तं तु पर्यवस्थापयितुं न कश्चिद्यत्नवानमात्यः ? (१०३)

---

(१०२) नैवेति । इदानीम् अद्यत्वे चक्रवाका कियत्कालिकमपि प्रियचक्रवाकीविश्लेषदुःखं सोढुमक्षमेषु धुरि कीर्तनीयाः विख्याताः द्वन्द्वचराः पक्षिणः तादृशाः वासवदत्ताविरहविधुरोदयनसमकक्षा नैव, न तेषां तत्पुरतो कापि गणना भवितुमर्हतीत्यर्थः विवेकहीनतया समधिकमोहवतां तिरश्चां का कथा स्त्रीविशेषैः प्रणयिप्राणतया विश्रुतैः इन्दुमतीसीताशकुन्तलादिभिः स्त्रीरत्नैः वियुक्ता अन्येऽपि विशिष्टविवेकवन्तः प्रणयिप्राणतया लोकप्रसिद्धाः अजरामदुष्यन्तादयः तादृशा नैव । एषामपि विरहवेदनोदयनस्य वासवदत्ताविप्रयोगयन्त्रणायाः षोडशीमपि कलां नार्हतीति भावः । तथाप्येवंविधस्य सर्वसामान्यस्त्रीजनस्याहोभाग्यमित्याह सेति । भर्ता स्वामी यां कामपि तथा वेत्ति स्वप्रेमभाजनभूतां मन्यते सा स्त्री धन्या कृतार्था महाभाग्यवतीत्यर्थः पुनः सा हि यद्विरहे सर्वतो रक्ष्यमप्यात्मानं तृणाय न मत्वाग्नौ निक्षेप्तुमुद्यतो भर्ता सा वासवदत्ता तु दग्धापि भर्तृस्नेहात् अदग्धा एव न खलु स उपरतो यस्य वल्लभो जनः स्मरतीति सा जीवत्येवेत्यर्थः अग्निः खलु नश्वरं पञ्चभूतनिर्मितमेव शरीरं दग्धुं प्रभवति नतु प्रियजनप्रेमपरिकल्पितमजरामरं यशश्शरीरमिति भावः ॥१३॥

(१०३) अथ भोः ! किम् ? पर्य्यवस्थापयितुम्—प्रकृतिस्थं कर्तुम् ।

ब्रह्मचारी—अस्ति रुमण्वान्नामामात्यो दृढं प्रयत्नवांस्तत्रभवन्तं पर्यवस्थापयितुम्। स हि, (१०४)

अनाहारे तुल्यः प्रततरुदितक्षामवदनः
शरीरे संस्कारं नृपतिसमदुःखं परिवहन्।
दिवा वा रात्रौ वा परिचरति यत्नैर्नरपतिं
नृपःप्राणान् सद्यस्त्यजति यदि तस्याप्युपरमः।१४।१०५

---

(१०४) दृढं बाढम्। प्रयत्नवान्—अतितरां सधैर्यं यथा तथा वा बहुलौपयिकयत्नतत्परः।

(१०५) तस्य तथा प्रयत्नवत्त्वं विवृणोति—स हि अनाहार इति च। स हि रुमण्वान् अनाहारे भोजनग्रहणाभावे तुल्यः उदयनेन समः यथा राजा वासवदत्ताशोकेन आहारं न गृह्णाति तथैव सोपि तादृशदुरवस्थोदयनशोकेनाहारे न प्रवर्तत इत्यर्थः। सततरुदितक्षामवदनः यथा राजः सततेनाविरतेन रुदितेन क्षामं क्षीणं—विच्छायं वदनं मुखं यस्य तथोक्तः तथैव रुमण्वानपि सतताश्रुपातपरिम्लानमुख इत्यर्थः। तथा शरीरे असंस्कारं राजेव देहे स्नानानुलेपनाद्युपस्काराभावं नृपतिना वत्सराजेन सम समानमेव दुःखं तत्तन्निमित्तं शोकं च परिवहन् छायेवोदयनसदृशीमेव दुरवस्थामनुभवन् सन् दिवा वा रात्रौ वा अहर्निशं यत्नैः परिसान्त्वनोपायैः नरपतिं राजानमुदयनं परिचरति शुश्रूषते। किंबहुना यदि तस्यापि अपिशब्दात् अग्नौ पतितस्य प्रधानामात्ययौगन्धरायणस्येव तमनुसरतो अमात्यरुमण्वतोऽपि उपरमः मृत्युः संघटितोऽभविष्यदिति शेषः। तर्हि नृपः उदयनः सद्यः वासवदत्ताविरहसमकालमेव प्राणान् त्यजति वर्तमानसामीप्ये लट् अत्यक्षदित्यर्थः। अथवा यदि नृपः प्राणान् त्यजति तर्हि तस्यापि सद्यः उपरमः भवति। इदानीं राजा रुमण्वत्परिचर्य्यैकाधीनजीवन इति भावः॥ १४॥

वासवदत्ता—( स्वगतम् ) दिट्ठिआ सुणिक्खित्तो दाणीं अय्यउत्तो । [ दिष्ट्या सुनिक्षिप्त इदानीमार्यपुत्रः ] (१०६)

यौगन्धरायणः—( आत्मगतम् ) अहो महद्भारमुद्वहति रुमण्वान् । कुतः, (१०७)

सविश्रमो ह्ययं भारः प्रसक्तस्तस्य तु श्रमः ।
तस्मिन् सर्वमधीनं हि यत्राधीनो नराधिपः ॥१५॥१०८

---

(१०६) दिष्ट्या आनन्दे । इदानीं मम विरहेण दुःखितदशायाम् । सुनिक्षिप्तः सुष्ठु निक्षिप्तः स्निग्धे रुमण्वति रक्षार्थं न्यस्तः अहोभाग्येन तथा सम्वृत्त इत्यहमानन्दमनुभवामीत्यर्थः ।

(१०७) महद्भारम् महतः सर्वनिदानभूतस्य राजशरीररक्षालक्षणस्य गुरुतरस्य मुख्यस्य कार्यस्य भारम् । महद्भिर्दुर्वहणीयं भारं वा । मध्यमपदलोपिसमासः । महद्भिः उदारैः—स्वशरीरनिरपेक्षैः प्रभुभक्तैरपि दुर्वहणीयं दुःखेन वोढुं शक्यं राजराज्यादिरूपं भारमिति तदर्थः । सर्वथा भारस्य महत्वमत्र विवक्षितम् । 'महाभार' मित्येव पाठोऽत्र भवेत् । 'संयत्यतुलास्त्रगौरवे' इति दण्डिनः प्रयोगात्तत्समये पुंसि संयच्छब्द इव भाससमये क्लीवेऽपि भारशब्दस्य प्रयोगव्यवहारो भवेदिति वा कल्पनीयम् ।

(१०८) सविश्रम इति । अयं राजमहिषीरक्षारूपः मया परिगृहीतः भारः सविश्रमः लब्धविश्रामः, उदयनोदयनिदानभूतायां पद्मावत्यां तन्न्यसनात् विश्रान्त इत्यर्थः । तस्य रुमण्वतस्तु श्रमः राजरक्षारिपुदलविदलनादिरूपः गुरुतरः भारः प्रसक्तः इदानीं यावत्तदवस्थ एव अद्यापि न विश्रान्त इत्यर्थः । रुमण्वतो भारस्य गुरुत्वं समर्थयते तस्मिन्निति । हि यतः नराधिपः राजा यत्र यस्मिन् अधीनः आयत्तः तस्मिन् सर्वं राज्यादि अधीनम् । राजरक्षां कुर्वन्तं रुमण्वन्तमेवेदानीं सर्वमन्वायत्तमिति तद्भारः सुतरां गुरुरिति भावः ।

( प्रकाशम् ) अथ भोः ! पर्यवस्थापित इदानीं स राजा ? (१०९)

ब्रह्मचारी—तदिदानीं न जाने । इह तया सह हसितं, इह तया सह कथितं, इह तया सह पर्युषितं, इह तया सह कुपितं, इह तया सह शयितम् इत्येवं तं विलपन्तं राजानममात्यैर्महता यत्नेन तस्मात् ग्रामात् गृहीत्वापक्रान्तम् । ततो निष्क्रान्ते राजनि प्रोषितनक्षत्रचन्द्रमिव नभोऽरमणीयः संवृत्तः स ग्रामः । ततोऽहमपि निर्गतोऽस्मि । (११०)

---

(१०९) पर्यवस्थापितः—प्रकृतौ अवस्थापितः किं रुमण्वता स्वपरिचर्यया राजा स्वास्थ्यं प्रापितः विगतवासवदत्ताविरहदुःखः कृत इति प्रश्नार्थः ।

(११०) तया प्राणप्रियया वासवदत्तया । हसितं मया हास्यरसोऽनुभूत इत्यर्थः । अत्र हसितमित्यारभ्य सर्वत्र क्तान्तेषु नपुंसके भावे क्तः । क्वचिदसंभवन्नपि प्रलापानुगुणत्वात्सगुण एव बोद्धव्यः । पर्य्युषितम्—अध्युषितम् । महता यत्नेन ( अप्रकृतिस्थत्वादिना गन्तुमनिच्छन्तमपि ) राजानं गृहीत्वा तस्माद्ग्रामादमात्यैरपक्रान्त ( अपसृत ) मित्यन्वयः । यावदत्र प्रियावियोगस्थले तिष्ठेत्तावत्तामेवानुस्मरन् प्रकृतिस्थो न भवेदित्यनुसन्दधानास्ते तमादाय कौशाम्बीमन्यत्र वाभिजग्मुरित्यर्थः । ग्रामात्—लावाणकात् । प्रोषितनक्षत्रचन्द्रम्—प्रोषितान्यस्तानि नक्षत्राणि चन्द्रश्च यस्मात्तथोक्तम् । अत्र प्रियाविरहविकलस्य राज्ञोऽप्रकृतिस्थत्वातिशयं बोधयितुं तदुपमानस्य चन्द्रस्य पश्चादुक्तिः । अरमणीयः—अहृद्यः निश्रीक इत्यर्थः । ततः अहमपि विनिर्गतोऽस्मि तस्माल्लावाणकग्रामात् तादृशाकस्मिकविघ्नोपनिपातेन स्वेष्टसिद्धौ निराशः सन् प्रस्थितोऽस्मि । अतएव स राजेदानीं पर्य्यवस्थापितो न वेत्यहं न जानामीत्यर्थः । अत्र यौगन्धरायणप्रश्नेषु कस्यचनोपेक्षा तु प्रकृतानौपयिकत्वबुद्ध्या बोध्या ।

तापसी—सो खु गुणवंतो णाम राआ, जो आअन्तुएणा वि इमिणा एव्वं पसंसीअदि। [स खलु गुणवान् नाम राजा, य आगन्तुकेनाप्यनेनैवं प्रशस्यते।] (१११)

चेटी—भट्टिदारिए किंणु खु अवरा इत्थिआ तस्स हत्थं गमिस्सदि। [भर्तृदारिके, किंनु खलु अपरा स्त्री तस्य हस्तं गमिष्यति] (११२)

पद्मावती—(आत्मगतम्) मम हिअएण एव्व सह मंतिदम्। [मम हृदयेनैव सह मन्त्रितम्] (११३)

ब्रह्मचारी—आपृच्छामि भवन्तौ। गच्छामस्तावत्। (११४)

---

(१११) गुणवान्—कन्याजनस्पृहणीयालौकिकसानुक्रोशत्वादिवरगुण-सम्पन्नः। आगन्तुकेनापि—परदेशवासिनाऽपरिचितेन पथिकेनापि। कन्याभिरयमवश्यं वरणीय इति तात्पर्यम्।

(११२) तदेवानुमोदमाना पूर्वप्रसङ्गश्रवणेन पद्मावत्या हृदये उत्प-मुदयनविषयकमनुरागबीजमङ्कुरयितुं भङ्ग्या चेट्याह—भर्तृदारिके इत्यादि। किन्नु खलु अपि नाम अपरा स्त्री कापि भाग्यवती राजकन्या तस्य प्राणाधि-कप्रणयिण्येकगतप्राणस्य कन्याजनकाम्यासुलभलोकोत्तरसानुक्रोशत्वादि-वरगुणगणालङ्कृतस्य चोदयनस्य हस्तं गमिष्यति ? तत्करग्रहसौभाग्यं प्राप्स्यति कच्चित् ? प्रियाविरहे तद्दशाश्रवणेनस्वसंभावितमप्येतत्पूर्वार्जित-सुकृतबलानुकूलदैवायाः कस्याश्चन कन्याया भाग्ये संघटेत तर्हि सा कृतार्थैव भवेत् का च कन्येदृशवरलाभेनात्मानं कृतार्थयितुं न प्रयतेतेति भावः।

(११३) मन्त्रितम्—जिज्ञासितम् मम हृदयस्याप्येषैव जिज्ञासोदेती-त्यर्थः। स्याच्चेदेवं तदाहमप्येवं प्रयतिष्ये इति भावः।

(११४) आपृच्छामि भवन्तौ—भवन्तौ परिव्राजककाञ्चुकीयौ आपृच्छे इदानीं गन्तुं युवयोरभ्यनुज्ञामभिलषामीत्यर्थः। कवीनां निरङ्कुशत्वादत्रापि "आङि नुप्रच्छ्योः" रिति तङ् न। वस्तुतस्तु परदुःखोपहतप्रज्ञस्य ब्रह्म-

उभौ—गम्यतामर्थसिद्धये। (११५)

ब्रह्मचारी—तथास्तु। ( निष्क्रांतः ) (११६)

यौगन्धरायणः—साधु, अहमपि तत्र भवत्याभ्यनुज्ञातो गन्तुमिच्छामि। (११७)

काञ्चुकीयः—तत्रभवत्याभ्यनुज्ञातो गन्तुमिच्छति किल।

पद्मावती—अय्यस्स भइणिआ अय्येण विना उक्कण्ठिस्सिदि [ आर्यस्य भगिनिकाऽऽर्येण विनोत्कण्ठिष्यते ] (११८)

यौगन्धरायणः—साधुजनहस्तगतैषा नोत्कण्ठिष्यति। ( काञ्चुकीयमवलोक्य ) गच्छामस्तावत्। (११९)

काञ्चुकीयः—गच्छतु भवान् पुनर्दर्शनाय।

यौगन्धरायणः—तथास्तु। ( निष्कान्तः )

---

चारिणः प्रमादोऽप्येष भूषणमेव। अतएवात्मन्युपक्रान्तस्याप्येकवचनस्यानुपदमेव 'गच्छाम' इति बहुवचनेन व्यत्यासः सङ्गच्छते। अन्यत्रापीदृशेषु प्रमादेषु यथासंभवमेवोह्यम्।

(११५) अर्थसिद्धये—स्वेष्टापरिसमासविद्याधिगमसम्पादनाय। वृद्धयोरियमाशीः।

(११६) तथास्तु—वृद्धयोरियमाशीः शिरसा मया प्रतिगृहीतेत्यर्थः।

(११७) साधु—ममेष्टं तत्रभवत्या स्वीकृतमिति मया धन्यवादः दीयत इत्यर्थः। तत्रभवत्या मगधराजकुमार्य्या पद्मावत्या। तत्कृतकृत्यः इदानीमहमपि गन्तुमनुज्ञामभिलाषामीत्यर्थः।

(११८) उत्कण्ठिष्यते—भवन्तमनुस्मरन्ती दुर्मना भविष्यतीत्यर्थः।

(११९) साधुजनहस्तगता—साधुजनस्यार्यजनस्यात्रभवत्या हस्तं गता सकलसुखनिदानमाश्रयं श्रिता नोत्कण्ठिष्यति नोत्सुका भविष्यति। तदुत्कण्ठाविनोदोऽप्यत्रभवतीहस्तगत इत्याशयः। अत्रापि तङ्भावः वक्तुः प्रकृतदशानुगुणो बोध्यः।

काञ्चुकीयः—समय इदानीमभ्यन्तरं प्रवेष्टुम्। (१२०)

पद्मावती—अय्ये ! वंदामि। [ आर्ये, वन्दे। ]

तापसी—जादे ! तव सदिसं भत्तारं लभेहि। [ जाते ! तव सदृशं भर्त्तारं लभस्व ]

वासवदत्ता—अय्ये ! वंदामि दाव अहं । [ आर्ये ! वन्दे तावदहम् ]

तापसी—तुवं पि अइरेण भत्तारं समासादेहि [ त्वमपि अचिरेण भर्तारं समासादय ]

वासवदत्ता—अणुग्गहीदह्मि। [ अनुगृहीतास्मि ]

काञ्चुकीयः—तदागम्यताम्, इत इतो भवति। सम्प्रति हि, (१२१)

खगा वासोपेताः सलिलमवगाढो मुनिजनः 1969

प्रदीप्तोऽग्निर्भाति प्रविचरति धूमो मुनिवनम्।

---

(१२०) अभ्यन्तरम्-पर्णशालागर्भम्।

(१२१) तदागम्यताम्—तत्—तस्मात् तथा कर्तुं सन्ध्यासमयः समुपस्थित इति हेतोरित्यर्थः। आगम्यतां—उटजाभ्यन्तरं प्रवेष्टुं प्रस्थीयताम्। तमेव विवृणोति सम्प्रति हीत्यादिना। इदं च श्लोकान्वयि, हि यतः सम्प्रति इदानीम्।

(१२२) खगा इति। खगाः पक्षिणः वासोपेताः वासं स्वनीडम् उपेता आश्रितवन्तः। मुनिजनः सलिलं अवगाढः सायं स्नानार्थं जलं प्रविष्टः गत्यर्थत्वात्कर्तरि क्तः। अग्निः प्रदीप्तः सायं होमार्थं समिद्धः—प्रज्वलितः भाति प्रकाशते। मुनिवनं परिचरति परितः प्रसरति। च किञ्च दूरात् सुदूरोर्ध्ववर्तिगगनमध्यतलात् परिभ्रष्टः पश्चिमदिशि अधः पतितः असौ

परिभ्रष्टो दूरात् रविरपि च संक्षिप्तकिरणो
रथं व्यावर्त्यासौ प्रविशति शनैरस्तशिखरम् ॥(१२२)

( निष्क्रान्ताः सर्व्वे )

इति प्रथमोऽङ्कः ॥

---

## अथ द्वितीयोऽङ्कः ।

( ततः प्रविशति चेटी )

चेटी—कुंजरिए ! कुंजरिए ! कहिं कहिं भट्टिदारिआ पदुमावदी । किं भणासि, एसा भट्टिदारिआ माहवीलदामण्डवस्स परसदो कन्दुएण कीलदित्ति । जाव भट्टिदारिअं उवसप्पामि । ( परिक्रम्यावलोक्य ) अम्मो इअं भट्टिदारिआ उक्करिदकण्णचुलीएण वाआमसंजादसेदविंदुविइत्तिदेण परिस्सन्तरमणी

---

रविः सूर्य्योऽपि संक्षिप्तकिरणः मन्दीभूतकरः सन् रथं व्यावर्त्य अग्रगमनोन्मुखमपि व्यावृत्तं कृत्वा प्रविविक्षितदेशाभिमुखं परिचाल्येति यावत् । अस्तशिखरं अस्ताचलचूडां शनैः प्रविशति अवलम्बते । अत्र सूर्यदशावर्णनभङ्ग्या संसारिणो जनस्योपचयापचयौ नियताविति समयसदृशः सुष्टूपदेशः काञ्चुकीयेनोपन्यस्तः ॥१६॥

इति प्रथमोऽङ्कः ।

(क) कुञ्जरिका तदाख्या अपरा चेटी । किं भणसीति "किं ब्रवीष्येवमित्यादि विना पात्रं ब्रवीति यत् । श्रुत्वेवानुक्तमप्येकस्तस्मादाकाशभापितम्" इत्युक्तलक्षणमाकाशभापितं बोध्यम् । माधवीलतामण्डपस्य मण्डपाकारस्य वासन्तीलताकुञ्जस्य । पार्श्वतः पार्श्वे । उत्कृतकर्णचूलिकेन—उत्कृते कन्दुकक्रीड़ायां दोलनच्छेदभिया ऊर्ध्वं कर्णशष्कुल्योरुपरिकृते स्थापिते कर्णचूलिके कर्णावतंसवलयौ यस्मिन् तथोक्तेन । यद्वा

अदंसणेण मुहेण कन्दुएण कीलन्दी इदो एव्व आअच्छदि । जाव उवसप्पिस्सं । [ कुंजरिके ! कुंजरिके ! कुत्र कुत्र भर्तृदारिका पद्मावती । किं भणसि, एषा भर्तृदारिका माधवीलता-मण्डपस्य पार्श्वतः कन्दुकेन क्रीडतीति । यावत् भर्तृदारिकामुपसर्पामि । अम्मो इयं भर्तृदारिका उत्कृतकर्णचूलिकेन व्यायाम-संजातस्वेदबिंदुविचित्रितेन परिश्रान्तरमणीयदर्शनेन मुखेन कन्दुकेन क्रीडन्तीत एवागच्छति । यावदुपसर्प्स्यामि । ] (क)

( निष्क्रान्ता ) प्रवेशकः । (ख)

---

( ततः प्रविशति कन्दुकेन क्रीडन्ती पद्मावती सपरिवारा वासवदत्तया सह ) । (ग)

**वासवदत्ता**—हला ! एसो दे कन्दुओ । [ हला ! एष ते कन्दुकः ] । (घ)

---

कर्णचूलिका कर्णप्रान्तयोर्लम्बमाना पुष्पाद्युद्ग्रथिता बालिकानां वेणिः । व्यायामसञ्जातस्वेदविन्दुविचित्रितेन—व्यायामेन कन्दुकक्रीडायां धावनाद्यायासेन सञ्जातैः उद्गतैः स्वेदबिन्दुभिः घर्मोदककणजालकैः विचित्रितेन अवश्यायशीकरनिकरावसिक्तप्रभातकालीनसरोजवत् वैचित्र्यमापादितेन । परिश्रान्तरमणीयदर्शनेन—परिश्रान्तं श्रमात्क्लान्तमपि रमणीयं नयनयोरासेचनकं अधिकाधिकदर्शनपिपासावर्द्धकं दर्शनं यस्य तथोक्तेन मुखेनोपलक्षिता । उपलक्षणे तृतीया प्रकृत्यादित्वात् ।

(ख) प्रवेशकः—"प्रवेशकोऽनुदात्तोक्त्या नीचपात्रप्रयोजितः । अंकद्वयान्तर्विज्ञेयः शेषं विष्कम्भके यथा ॥" इत्युक्तलक्षणः पञ्चविधोपक्षेपकान्यतमः प्रथमाङ्कातिरिक्ताङ्कद्वयान्तः प्रयोजितः पात्रप्रवेशसूचकः सन्दर्भः प्राकृतभाषिचेटीलक्षणनीचपात्रद्वारा प्रयुक्तः ।

(ग) सपरिवारा चेटीसहिता ।

(घ) श्रान्ततया दूरस्थतया वा कन्दुकमपश्यन्तीमुत्प्रेक्ष्येवाह एष ते कन्दुक इति ।

पद्मावती—अय्ये ! भोदु दाणिं एत्तअं [ आर्ये, भवत्विदानीमेतावत् । ] (ङ)

वासवदत्ता—हला ! अदिचिरं कन्दुएण कीलिअ अहिअसंजादराआ परकेरआ विअ दे हत्था संवुत्ता [ हला ! अतिचिरं कन्दुकेन क्रीडित्वाऽधिकसंजातरागौ परकीयाविव ते हस्तौ संवृत्तौ ] (च)

चेटी—कीलदु कीलदु दाव भट्टिदारिआ । णिव्वत्तीअदु दाव अअं कण्णाभावरमणीओ काळो [ क्रीडतु क्रीडतु तावत् भर्तृदारिका । निर्वर्त्यतां तावत् अयं कन्याभावरमणीयः कालः ] । (छ)

---

(ङ) एतावत्—एतावन्मात्रम् । यावत् क्रीडितं तावदेव । अतः परं न क्रीडिष्यामीत्यर्थः ।

(च) तदेवानुमोदमानाह-हला सखि पद्मावति ! क्रीडित्वा—स्थितायां इति शेषः अतएव समानकर्तृकत्वात्त्क्वा । अधिकसञ्जातरागौ—स्वाभाविकरागापेक्षयात्यन्तलोहितवर्णौ । अतितरां श्रान्तौ इत्यर्थः । अतएव परकीयौ इव—अन्यदीयौ यथा स्वकार्य्येऽक्षमाविति यावत् । अतोऽधिकं क्रीडितुमिदानीं न युक्तमित्यर्थः ।

(छ) क्रीडतु क्रीडतु—पुनः पुनः खेलतु । पौनःपुन्ये द्विर्भावः । निर्वर्त्यताम्—समाप्यतां क्रीडानन्दानुभवेन सार्थकीक्रियतामित्यर्थः । कन्याभावरमणीयः—कन्याभावेन सुलभक्रीडेन कन्यात्वेन मनोहरः यावत्परिणयमेवेदृशी क्रीडा सुलभा परिणयानन्तरन्त्वेषा दुर्लभा स्यादिति भावः । एतेनास्याः परिणयः प्रत्यासन्न इति व्यज्यते ।

पद्मावती—अय्ये, किं दाणिं मं मोहसिदुं विअ णिज्झाअसि। [आर्ये! किमिदानीं मामपहसितुमिव निध्यायसि।] (ज)

वासवदत्ता—णहि णहि। हला! अधिअं अज्ज सोहदि। अभिदो विअ दे अज्ज वरमुहं पेक्खामि। [नहि नहि। हला! अधिकमद्य शोभते। अभित इव तेऽद्य वरमुखं पश्यामि।] (झ)

पद्मावती—अवेहि। मा दाणिं मं ओहसि [अपेहि। मेदानीं मामपहस।] (ञ)

वासवदत्ता—एसह्मि तुह्णीआ भविस्सम्महासेणवहू! [एषास्मि तूष्णीका भविष्यन्महासेनवधु।] (ट)

---

(ज) मामपहसितुमिव निध्यायसि—उपहसितुमिव भ्रान्तिदशायां मद्गतं किमप्यशोभनमन्विष्य ममोपहासं कर्तुमिव निर्वर्णयसि? "निर्वर्णनं तु निध्यान" मित्यमरः।

(झ) नहि नहि। मामैवम् सखि! "भवतीगतं किमप्यशोभनं नास्ति अद्य अधिकं शोभते भवती, यथा मन्निध्याननिमित्तं मन्यते भवति तन्नास्त्येव किन्तु ते तव वरमुखं वरस्य उपयन्तुः मुखम् अभित इव आसन्नमिव पश्यामि तर्कयामि, सद्यस्ते परिणयो भावी, परिणयानन्तरं पतिगृहं गतायास्तु सख्या मुखदर्शनं मम दुर्लभं स्यादितीदानीं सतृष्णं पश्यामीत्यर्थः। "समीपोभयतः शीघ्रसाकल्याभिमुखेऽभित" इत्यमरः।

(ञ) सविलक्षेव प्रणयरुष्टेव चाह—अपेहि अपसर, नैष ते परिहासो मे रोचत इति नातः परमप्युपहसितव्यमित्यर्थः।

(ट) इदानीं वरविषये पद्मावतीहृदयं जिज्ञासमाना यथाश्रुतभाविश्वशुरकुलविशेषसूचकपदेन सम्बोधयन्ती तथा स्वीकरोति। एषेति। हे भविष्यन्महासेनवधु भाविनि महासेनस्नुषे! सखि! एषा इयमहं तूष्णीका

पद्मावती—को एसो महासेणो णाम । [क एष महासेनो नाम । ] (ठ)

वासवदत्ता—अत्थि उज्जइणीओ राआ पज्जोदो णाम । तस्स बलपरिमाणणिव्वुत्तं णामहेअं महासेणो त्ति । [ अस्ति उज्जयिन्या राजा प्रद्योतो नाम । तस्य बलपरिमाणनिर्वृत्तं नामधेयं महासेन इति । ] (ड)

चेटी—भट्टिदारिआ तेण रञ्जा सह संबंधं णेच्छदि । [ भर्तृदारिका तेन राज्ञा सह सम्बन्धं नेच्छति । ] (ढ)

वासवदत्ता—अह केण खु दाणिं अभिळसदि । [ अथ केन खल्विदानीमभिलषति । ]

---

तूष्णीं शीला मौनभावमापन्ना अस्मि । 'शीले को मलोपश्च' इति कमलोपौ यद्यपि नैष परिहासः किन्तु पूर्वं चेट्याः कथनेन महासेनपुत्रस्तव वरो निश्चित इति भूतार्थमेव मयोक्तं तथाप्येतद्भवत्यै यदि न रोचते तर्हि नाहमेतद्विषये किमपि वदिष्यामीति भावः ।

(ठ) पूर्वन्तु मम श्वशुरत्वेन चेट्या प्रद्योत उल्लिखितः । इदानीमियं तथात्वेन महासेनं संकीर्तयतीति सन्दिह्य पृच्छति क एष इति ।

(ड) उज्जयिनीयः उज्जयिनीशब्दाद्भवाद्यर्थे वा नामधेयस्येति वृद्धसंज्ञायां वृद्धाच्छ इति तत्रभव इति वा छः । बलपरिमाणनिर्वृत्तम्—बलस्य सेनायाः परिमाणेन निर्वृत्तं निष्पन्नं महती असंख्याताक्षौहिणी सेना यस्येति अन्वर्थं महासेन इति नामधेयं गौणं नाम नामान्तरमस्तीत्यर्थः महासेनासमृद्धत्वात् श्लाघ्यं भवत्या भावि श्वशुरकुलमिति भावः ।

(ढ) सम्बन्धम्—तत्पुत्रेण सह विवाहम् ।

चेटी—अत्थि वच्छराओ उअअणो णाम। तस्स गुणाणि भट्टिदारिआ अभिळसदि। [ अस्ति वत्सराज उदयनो नाम। तस्य गुणान्भर्तृदारिकाभिलषति। ] (ण)

वासवदत्ता—( आत्मगतम् ) अय्यउत्तं भत्तारं अभिळसदि (प्रकाशम्) केण कारणेण? [ आर्यपुत्रं भर्तारमभिलषति। केन कारणेन? ] (त)

चेटी—साणुक्कोसो त्ति। [सानुक्रोश इति।] (थ)

वासवदत्ता—( आत्मगतम् ) जाणामि जाणामि। अअं वि जणो एव्वं उम्मादिदो। [ जानामि जानामि। अयमपि जन एवमुन्मादितः।] (द)

चेटी—भट्टिदारिए! जदि सो राआ विरूवो भवे। [ भर्तृदारिके, यदि स राजा विरूपो भवेत्। ] (ध)

---

(ण) गुणान्—शौर्य्यादीन्। गुणैकपक्षपातिनी राजकुमारी तादृशलोकोत्तरगुणगणालंकृतं वत्सराजमेव भर्तारमिच्छतीत्यर्थः।

(त) केन कारणेन—बहुषु गुणेषु सत्स्वपि एतदाकर्षकस्तस्मिन् को नाम गुणविशेष इति पुनः प्रश्नाभिप्रायः।

(थ) सानुक्रोश इति—अनुक्रोशेन दयया सहितः स इति कारणेनेत्यर्थः सकलजनमनःसंवननं वरगुणेषु मूर्द्धन्यतया कन्याजनस्पृहणीयं वासवदत्ताविरहे वत्सराजदुरवस्थाश्रवणेन विदितं तद्गतं सर्वगुणप्रधानं सानुक्रोशत्वमेव तच्चित्तमाकर्षतीति भावः।

(द) अयमपि जनः—मल्लक्षणः अहमपीत्यर्थः। एवं पद्मावतीव अथवा तदीयेन सानुक्रोशत्वगुणेन उन्मादितः उन्मत्तः कृतः तदेकप्रणयप्रवणप्राणः सम्पादित इत्यर्थः।

(ध) विरूपः—अदर्शनीयः। दर्शनीयत्वमपि कन्याजनकाम्यं वरगुणान्तरमपेक्षितमिति भावः।

**वासवदत्ता**—णहि णहि दंसणीओ एव्व। [ नहि नहि ! दर्शनीय एव।] (न)

**पद्मावती**—अय्ये ! कहं तुमं जाणासि। [आर्ये! कथं त्वं जानासि। ] (प)

**वासवदत्ता**—(आत्मगतम्) अय्यउत्तपक्खवादेण अदिक्कंदो समुदाआरो। किं दाणिं करिस्सं। होदु दिट्ठं। (प्रकाशम्) हला ! एव्वं उज्जइणीओ जणो मंतेदि। [ आर्यपुत्रपक्षपातेनातिक्रान्तः समुदाचारः। किमिदानीं करिष्यामि ! भवतु, दृष्टम्, हला ! एवमुज्जयिनीयो जनो मन्त्रयते। ] (फ)

**पद्मावती**—जुज्जइ। णखु एसो उज्जइणीदुललहो सव्वजण-

---

(न) दर्शनीय एव सुरूप एव। एतदपि तादृशं गुणान्तरं तस्मिन्नस्तीत्यर्थः।

(प) कथं—दृष्ट्वा श्रुत्वा वेत्यर्थः।

(फ) आर्य्यपुत्रपक्षपातेन—भर्तृपक्षानुकूल्येन स्वामिश्लाघाप्रावण्येनेति यावत्। समुदाचारः—भर्तुः सुरूपत्वसमर्थनलक्षप्रकर्षोत्कर्षसूचकः व्यवहारः अतिक्रान्तः मर्य्यादामतीत्य गतः—अति सर्वत्र वर्जयेदित्यर्थः ईदृशप्रश्नान्तरोत्थापकतयानीष्टः सम्वृत्त इत्यर्थः। इह प्रच्छन्नाया मया स्वभेदोच्छेदभिया न खलु तावद्वक्तुं युक्तमासीदिति भावः। किमिदानीं करिष्यामि ? इदानीं किमुत्तरं दास्यामि ? असत्यं वक्तुमयुक्तं सत्यं चोक्तं स्वरहस्योच्छेदशङ्काजनकमित्युभयसाधकमस्याः प्रश्नस्य किमुत्तरमिदानीं प्रतिपत्स्य इत्यर्थः। भवतु दृष्टम् तादृशमुत्तरमुपलब्धम्। उज्जयिनीयः उज्जयिनीभवः जनः एवं वत्सराजो दर्शनीय इति मन्त्रयते कथयति। ततः श्रुत्वैव मया तथोक्तमित्यर्थः।

(ब) युज्यते—श्रुत्वा तथोक्तिः उपपद्यते। (यतः) न खल्वेष उज्जयिनीदुर्लभः—श्वशुरालयत्वात्तत्र तस्यासकृद्गमनसम्भवादिति भावः। किञ्च दृष्ट्वापि तथा त्वदुक्तिर्नानुपपन्नेत्याह—सर्वजनेति। सौभाग्यं सुभगत्वं—दर्शनीयत्वं

णोभिरामं खु सोभग्गं णाम। [ युज्यते। न खल्वेष उज्जयिनी-दुर्लभः। सर्वजनमनोऽभिरामं खलु सौभाग्यं नाम। ] (ब)

( प्रविश्य )

धात्री—(भ)-जेदु भट्टिदारिआ। भट्टिदारिए, दिण्णासि। [ जयतु भर्तृदारिका। भर्तृदारिके! दत्तासि। ] (म)

वासवदत्ता—अय्ये! कस्स? [आर्ये! कस्मै?]

धात्री—वच्छराअस्स उदअणस्स। [ वत्सराजायोदय-नाय। ] (य)

वासवदत्ता—अह कुसली सो राआ। [ अथ कुशली स राजा। ] (र)

---

नाम सर्वजनमनोऽभिरामम् सर्वेषां जनानां दिदृक्षूणामदिदृक्षूणां च मनोऽभिरामं चित्ताकर्षकम् ततश्च तत्रत्याया अनिच्छन्त्या अपि आर्यायाः "नहि घटायोन्मीलितं चक्षुः पटम् न पश्यति" इति न्यायेन तद्दर्शनमपि नासंभवतीति सर्वथार्यायास्तथोक्तिरुपपद्यत एवेति भावः। एतावता सन्दर्भेण पद्मावत्या हृदये उप्तं वत्सराजविषयकानुरागबीजं क्रमेणाङ्कुरितमिदानीं पल्लवितं बोध्यम्। तत एव च "न खल्वेष उज्जयिनीदुर्लभ" इत्युक्त्या जगदीश्वरकृपया सद्य एव "न खल्वेष राजगृहदुर्लभ" इत्येवमपि विपरिणतं सम्पत्स्यते इत्यपि ध्वनितमित्यवगन्तव्यम्।

(भ) धात्री—पद्मावत्या उपमाता।

(म) दत्तासि—वाचा इत्यर्थः।

(य) वत्सराजाय—अन्योदयनव्यवच्छेदार्थमिदं विशेषणम्।

(र) अथ—किम्? वासवदत्ताविरहदुःखेन सोऽतीव दुरवस्थः श्रुत इत्येष प्रश्नः।

धात्री—कुसली सो आअदो। तस्स भट्टिदारिआ पडिच्छिदा अ! [कुशली स आगतः। तस्य भर्तृदारिका प्रतीष्टा च] (ल)

वासवदत्ता—अच्चाहिदम्। [अत्याहितम्।] (व)

धात्री—किं एत्थ अच्चाहिदं। [किमत्रात्याहितम्।] (श)

वासवदत्ता—ण हु किंचि। तह णाम संतप्पिअ उदासीणो होदि त्ति। [न खलु किञ्चित्। तथा नाम संतप्योदासीनो भवतीति।] (ष)

---

(ल) न केवलं कुशली अत्र राजगृहे आगतोऽपि न केवलमागतः अपि तु वाचा दत्ता राजकुमारी तेन प्रतीष्टा वाचा स्वीकृता चेत्यर्थः।

(व) स्थूणानिखननन्यायेन भर्तुः प्रकृतकार्य्यौचित्यमेव द्रढयितुमधिक्षिपति अत्येत्यादि।—अत्याहितम्—जीवानपेक्षि कर्म। जीवनवत् जीवनतोऽप्यधिकप्रियां वा वासवदत्तामनपेक्ष्य—तद्गतं तादृशं प्रेमाविगणय्य नूतनपत्नीपरिग्रहे प्रवृत्तिलक्षणं कार्यं, तस्य महान् खल्वेपोऽयथाचाररूपः साहस इति भावः। 'अत्याहितं महाभीतिः कर्म जीवानपेक्षि च' इत्यमरः।

(श) वासवदत्तायास्तादृशमर्थं भावं चाबुद्ध्वा पृच्छति किमिति। अत्र नूतनपत्नीग्रहणे। युद्धादौ प्रवृत्तिवदत्र किमत्याहितम्?

(ष) न खलु किञ्चित्—तादृशं किमपि नैव किन्तु तथा नाम-तपस्विन्याः वासवदत्तायाः कृते तथा—हा प्रिये वासवदत्ते इत्यादिना नाम स्फुटं सन्तप्य सन्तापपूर्वकं विलप्य निजगतं तादृशं तत्प्रेम तद्गतप्राणतां वा प्रकाश्य उदासीनो भवति—पत्न्यन्तरपरिग्रहप्रवृत्त्या तद्विषये औदास्यमवलम्बते इति—एतदेवात्याहितमित्यर्थः। अहो! "वज्रादपि कठोराणि मृदूनि कुसुमादपि। लोकोत्तराणां चेतांसि को नु विज्ञातुमर्हती" ति भावः।

धात्री—अय्ये ! आअमप्पहाणाणि सुलहपय्यवत्थाणाणि महापुरुसहिअआणि होन्ति । [ आर्ये ! आगमप्रधानानि सुलभ-पर्यवस्थानानि महापुरुषहृदयानि भवन्ति । ] (स)

वासवदत्ता—अय्ये ! सअं एव्व तेण वरिदा । [ आर्ये ! स्वयमेव तेन वृता । ] (ह)

धात्री—णहि णहि अण्णप्पओअणेण इह आअदस्स अभिजणविञ्ञाणवओरूवं पेक्खिअ सअं एव्व महाराएण

---

(स) आगमप्रधानानि—आगमः शास्त्रं प्रधानं मुख्यं येषां तथोक्तानि शास्त्रीयोपदेशप्रवणानीत्यर्थः । अतएव सुलभपर्यवस्थानानि—सुलभं अनायाससाध्यं पर्यवस्थानं शोकपरिहारेण पुनः प्रकृतावववस्थितिः येषां तथाभूतानि महापुरुषहृदयानि—महापुरुषाणां "विपदि धैर्य्य" मित्या-द्युक्तलक्षणसम्पन्नानां महात्मनां चेतांसि भवन्ति । ततश्च "गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः" इत्यागमोक्तेः तस्य विकृतिपरिहारपूर्वकं पुनः प्रकृताववस्थानं "वहन्ति शोकशङ्कुञ्च कुर्वन्ति च यथोचितम् । कोऽप्येष महतां हन्त गाम्भीर्य्यानुगुणो गुणः" इत्याद्यभियुक्तोक्तेर्वासवदत्ताविषयकतादृश-स्नेहानुवर्तनपूर्वकं पत्न्यन्तरपरिग्रहणं चेत्येतद्द्वयमपि सम्भवतीति नात्र किमप्यत्याहितमिति भावः । प्रायः सत्पुरुषाः शोकवास्तव्या न भवन्तीति शाकुन्तले ।

(ह) स्वयमेव तेन वरिता ?—स्वयमेव—दातृपक्षाग्रहं विनैव, तां प्रार्थयितुमेवात्रागतेन च तेन वत्सराजेन सा वृत्ता किमित्यर्थः ।

(क्ष) नहि नहि—सर्वथा नास्त्येततः नहि तांप्रार्थयितुं किन्तु अन्य-प्रयोजनेन—केनाप्यविदितेन प्रयोजनान्तरेणेह राजगृहे आगतस्य तस्य अभिजनं प्रख्यातं विशुद्धं कुलं विज्ञानं वीणावादनादिषु शिल्पकलासु शास्त्रेषु च पाटवं वयः तारुण्यं रूपं आसेचनकं स्वरूपं च दृष्ट्वा सर्वथा

दिण्णा। [ नहि नहि । अन्यप्रयोजनेनेहागतस्याभिजनविज्ञान-वयोरूपं दृष्ट्वा स्वयमेव महाराजेन दत्ता।] (ट)

**वासवदत्ता**—( आत्मगतम् ) एव्वं। अणवरद्धो दाणिं एत्थ अय्यउत्तो। [एवम्। अनपराद्ध इदानीमत्रार्यपुत्रः।] (त्र)

( प्रविश्यापरा )

**चेटी**—तुरवदु तुवरदु दाव अय्या। अज्ज एव्व किल सोभणं णक्खत्तं। अज्ज एव्व कोदुअमंगलं कादव्वं त्ति अम्हाणं भट्टिणी भणादि। [त्वरतां त्वरतां तावदार्या। अद्यैव किल शोभनं नक्षत्रम्। अद्यैव कौतुकमंगलं कर्तव्यमित्यस्माकं भट्टिणी भणति।] (ज्ञ)

**वासवदत्ता**–( आत्मगतम् ) जह जह तुवरदि, तह तह अंधीकरेदी मे हिअअं। [ यथा यथा त्वरते, तथा तथान्धी-करोति मे हृदयम्। ] (अ)

---

योग्यं वरमवधार्य स्वयमेव न तु तत्प्रार्थनया महाराजेन तत्पितृस्थानीयेन दर्शकेन दत्ता।

(त्र) एवम्—दातृपक्षाग्रहादिनैव सा स्वीकृता न स्वयमित्यर्थः तर्हि अत्र पद्मावती-स्वीकारे अनपराद्धः—अकृतापराधः मदीयस्नेहोपेक्षा-सम्भावितापराधरहित इत्यर्थः। इच्छाभावेऽपि परकीयाग्रहपूरणं महतां भूषणमेवेति भावः।

(ज्ञ) आर्या धात्री कौतुकमङ्गलम्—विवाहे पूर्वाङ्गभूतं स्त्रीजनैरनुष्ठेयं ( सगुन ) इति लोकप्रसिद्धं गीतादिकमङ्गलाचरणम्। भट्टिनी—स्वामिनी—दर्शकमहिषी।

( अ ) अन्धीकरोति—कार्यवशाद्धैर्येणानन्धमप्यन्धं सम्पादयति। सापत्न्यदुःखान्धकारेणाच्छन्नं करोतीत्यर्थः। प्रियस्य दाक्षिण्ये आत्मनश्च पतिव्रतात्वे सत्यपि प्रकृत्या सापत्न्यदुःखस्य दुस्सहत्वादियं चिन्तोक्तिः।

धात्री—एदु एदु भट्टिदारिआ। [एत्वेतु भर्तृदारिका।] (आ)

( निष्क्रान्ताः सर्वे )

इति द्वितीयोऽङ्कः।

---

## अथ तृतीयोऽङ्कः।

( ततः प्रविशति विचिन्तयन्ती वासवदत्ता ) ( १ )

वासवदत्ता—विवाहामोदसंकुले अंतेउरचउस्साले परित्त-जिअ पदुमावर्दि इह आअद्ह्मि पमदवणं। जाव दाणिं भाअधे-अणिव्वुत्तं दुःखं विणोदेमि। ( परिक्रम्य ) अहो अच्चाहिदं। अय्यउत्तो वि णाम परकेरओ संवुत्तो। जाव उवविसामि। ( उपविश्य ) धञ्ञा खु चक्कवाअवहू जा अण्णोण्णविरहिदा ण जीवइ। ण खु अहं पाणाणि परित्तजामि। अय्यउत्तं पेक्खामि त्ति एदिणा मणोरहेण जीवामि मंदभाआ। [विवाहामोदसंकुले अन्तःपुरचतुश्शाले परित्यज्य पद्मावतीमिहागतास्मि प्रमदवनम्। यावदिदानीं भागधेयनिर्वृत्तं दुःखं विनोदयामि ( परिक्रम्य )

---

(आ) भर्तृदारिका—पद्मावती कन्याया अपि कौतुकमङ्गलारम्भे समु-पस्थितेरावश्यकत्वात्त्वयापीदानीं तत्र गन्तव्यमित्यर्थः।

इति द्वितीयोऽङ्कः।

---

(१) विचिन्तयन्ती—वक्ष्यमाणां चिन्तां कुर्वाणा।

(२) विवाहामोदसङ्कुले—विवाहमहोत्सवे आगतैः बहुजनैः बन्धुबा-न्धवादिभिराकीर्णे। अन्तःपुरचतुश्शाले—चतस्रः शालाः समाहृताः चतुश्शालम्, आबन्तो वेति क्लीबत्वम्। अतःपुरस्य ( रनिवास ) इति लोकप्रसिद्धस्य चतुश्शाले परस्पराभिमुखशालाचतुष्टयगृहे ( चौपार ) इति प्रसिद्धे। पद्मावतीं परित्यज्य तादृशजनसंमर्दे प्रच्छन्नाया ममावस्थान-

अहो अत्याहितम् । आर्यपुत्रोऽपि नाम परकीयः संवृत्तः । यावत् उपविशामि । ( उपविश्य ) धन्या खलु चक्रवाकवधूः यान्योन्य-विरहिता न जीवति । न खल्वहं प्राणान् परित्यजामि । आर्यपुत्रं पश्यामीति एतेन मनोरथेन जीवामि मन्दभागा ।] (२)

( ततः प्रविशति पुष्पाणि गृहीत्वा चेटी )

**चेटी**—कहिं णु खु गदा अय्या आवन्तिआ (परिक्रम्यावलोक्य) अम्मो इअ चिंतासुंञहिअआ । णीहारपडिहदचन्दलेहा विअ अमण्डिदभद्दअं वेसं धारअन्दी पिअंगुसिलापट्टए उवविट्ठा । जाव उपसप्पामि । ( उपसृत्य ) अय्ये ! आवंतिए । को कालो,

---

मयोग्यमिति तया सहावस्थानं त्यक्त्वा इह विजने प्रमदवनं केवलमन्तः पुरोचितमुद्यानमागतास्मि । भागधेयनिर्वृत्तं—दुरदृष्टोपनतं दुःखं विनोदयामि—अपनयामि लघूकरोमीत्यर्थः । अहो अत्याहितं—अहो आश्चर्यं मदर्थे महद्भयमुपस्थितमित्यर्थः । आर्यपुत्रोऽपि यः मदेकगतप्राणः मदीय आसीत् सोऽपि नाम धिक् परकीयः अन्यदीयः पद्मावत्याः भर्ता सम्वृत्तः जातः अहो मे दुर्दैवं दुर्विलसितमित्यर्थः । उपविशामीत्यनेन चिन्तया दौर्बल्येन दण्डायमानतयावस्थानेऽशक्तिर्द्योत्यते । चक्रवध्वास्तादृशावस्थावर्णनेन तिरश्चामपेक्षयाप्यहं हीनेति सूचयति । तथापि तादृशजीवने कारणमाह आर्य्यपुत्रमिति । प्रियतमपुनःसन्दर्शनाशैकनिबन्धनमेव ममाद्यापि जीवनमिति भावः । "आशाबन्धः कुसुमसदृशं प्रायशो ह्यङ्गनानां सद्यःपाति प्रणयि हृदयं विप्रयोगे रुणद्धी" ति मेघदूते । अनेन सन्दर्भेण वासवदत्ताया विप्रलम्भः परिपोषितः ।

(२) आवन्तिका—अवन्तिजनपदभवा अर्थिभगिनी । अनेनैव नाम्नात्र त्यैर्जनैर्वासवदत्ताभिधीयते । अम्मो आश्चर्यार्थकं प्राकृतमव्ययम् । अहो इति संस्कृतच्छाया । अहो आश्चर्यम् । तच्चाद्य विवाहप्रमोदावसरे चिन्ताशून्यहृदयेत्यादिदर्शनजन्यम् । इयं चिन्ताशून्यहृदया—चिन्तया प्रोषितपतिविषयकयेति बाह्योऽर्थः । आर्यपुत्रोपीत्यादिपूर्वोक्तभावनयेति तु वास्तवः ।

तुम अण्णेसामि। [क नु खलु गता आर्यावंतिका। (परिक्रम्याव-लोक्य ) अम्मो इयं चिन्ताशून्यहृदयानीहारप्रतिहतचन्द्रलेखेवा-मण्डितभद्रकं वेषं धारयन्ती प्रियंगुशिलापट्टके उपविष्टा। याव-दुपसर्पामि। आर्ये अवन्तिके! कःकालः, त्वामन्विष्यामि।] (३)

**वासवदत्ता**—किण्णिमित्तं। [किन्निमित्तम्।] (४)

**चेटी**—अह्माअं भट्टिणी भणादि-महाकुलप्पसूदा सिणिद्धा णिउणात्ति इमं दाव कोदुअमालिअं गुह्मदु अय्या। [अस्माकं भट्टिनी भणति--महाकुलप्रसूता स्निग्धा निपुणेति इमां तावत् कौतुकमालिकां गुम्फत्वार्या।] (५)

**वासवदत्ता**—अह कस्स किल गुह्मिदव्वं। [अथ कस्मै किल गुम्फितव्यम्।]

**चेटी**—अह्माअं भट्टिदारिआए। [अस्माकं भर्तृदारिकायै।];

---

शून्यं प्रकृतावसरोचितहर्परहितं हृदयं यस्याः तथोक्ता अतएव नीहारप्रति-हतचन्द्रलेखेव नीहारेण हिमेन कुञ्झटिकया प्रतिहता आच्छन्ना चन्द्र-लेखेव चन्द्रकलेव विच्छायेत्यर्थः। अमण्डितभद्रकं--अनलङ्कृतमपि भद्रकं हृद्यं वेषं धारयन्ती विवाहप्रमोदोचितभूषणादिरहितापि रमणीयेत्यर्थः। रम्याणां विकृतिरपि श्रियन्तनोतीति भावः। प्रियङ्गुशिलापट्टके प्रियङ्गुः श्यामालता तद्वत् श्यामे प्रियङ्गुलतातितपरिवृते वा शिलापट्टके विस्तृत-पाषाणखण्डे श्याममणिमये फलके वा उपविष्टा आसीना तिष्ठतीत्यर्थः। कः कालः—बहुलः समयोऽतीतः बहोः कालादारभ्येत्यर्थः।

(४) किन्निमित्तं—कस्मै प्रयोजनाय ?

( ५ ) महाकुलप्रसूता—उत्तमवंशजाता, स्निग्धा—पद्मावत्यां स्नेह-वती। निपुणा—प्रकृते कार्ये दक्षा इति हेतोः एतानि त्रीणि विशेषणानि गुम्फनयोग्यतासौकर्याद्योतकानि। कौतुकमालिकाम् । विवाहावसरे चिर-सौभाग्यादिसम्पत्तये कन्यया धार्या ... मङ्गलसूत्र ...

**वासवदत्ता**—(आत्मगतम्) एदं पि मए कत्तव्वं आसी। अहो अकरुणा खु इस्सरा। [ एतदपि मया कर्तव्यमासीत्। अहो अकरुणाः खल्वीश्वराः।] (६)

**चेटी**—अय्ये ! मा दाणिं अण्णं चिंतिअ। एसो जामादुओ मणिभूमीए ह्णाअदि। सिग्घं दाव गुम्हदु अय्या। [आर्ये ! मेदानीमन्यच्चिन्तयित्वा। एष जामाता मणिभूम्यां स्नायति। शीघ्रं तावत् गुम्फत्वार्या।] (७)

---

(६) एतदपि सपत्न्याः कृते कौतुकमालिकागुम्फनमपि। अपिशब्दात्स्वयमेव सपत्नीं संघटयितुं दुस्सहप्रियविश्लेपदुःखसहनपूर्वं प्रयतनमपि मया कर्तव्यमासीत् ममैव कर्तव्यत्वेन विधिना मम भालफलके लिखितमासीत्। अहो विधातुः स्वातन्त्र्यमिति भावः। अथवा प्रकृतप्रभुभिः राज्ञीप्रभृतिभिः गुम्फनकर्म्यन्तरे सत्यपि दुःखिन्याः ममैव करणीयत्वेनावधारितमभूत्। भविष्याः सपत्न्याः कृते कौतुकमालिकागुम्फनमेव तावदतीव दुस्सहं दुःखिनीम्प्रति तदर्थमाज्ञादानं चातितरामनुचितमित्यहो प्रभूणां निर्दयं स्वातन्त्र्यमिति भावः।

ईश्वरः ईशधातोर्वरचि ईश्वरः ईश्वरा च। पुमान् स्त्रियेत्येकशेषः। अर्थद्वयेऽपि समानत्वम्।

(७) इदानीं—प्रत्यासन्नेऽवसरे अन्यत् स्वागतं किमपि मा अलं चिन्तयित्वा मा चिन्तयेत्यर्थः। "अलंखल्वो" रिति सूत्रे तयोस्तत्पर्य्यायाणां च ग्रहणमित्यभिमानः। "सहि मा एव्वं मन्तिय" "मा मा अतिमेत्तं मए किदे उक्कण्ठिदुं" इति शाकुन्तले कालिदासोऽपि। मणिभूम्यां—मणिमय्यां वेदिकायाम्। स्नायति—स्नाति। स्ना शौचे। प्राकृते "स्वरादनतो वा" इति वैकल्पिकेऽकारागमे हणा अदि हणाइ इति रूपद्वयं सिध्यति। इदं च मङ्गलस्नानविवाहपूर्वाङ्गभूतं तत्राचारात्सधवाभिः निष्पाद्यत इत्यत्र 'हणाबाअदि' वा 'हणाबीअदि' इति वा समुचितः पाठो भवेदिति प्रतीयते, सुवासिनीभिः

**वासवदत्ता**—(आत्मगतम्) ण सक्कणोमि अण्णं चिंतेदु। (प्रकाशम्) हला! किं दिट्ठो जामादुओ। [न शक्नोम्यन्यच्चिन्तयितुम्। हला! किं दृष्टो जामाता?] (८)

**चेटी**—आम दिट्ठो भट्टिदारिआए सिणेहेण अह्माअं कोदूहलेण अ। [आं दृष्टो भर्तृदारिकायाः स्नेहेनास्माकं कौतूहलेन च] (९)

**वासवदत्ता**—कीदिसो जामादुओ। [कीदृशो जामाता।] (१०)

**चेटी**—अय्ये, भणामि दाव, ण ईरिसो दिट्ठपुरुवो। [आर्ये, भणामि तावत्। नेदृशो दृष्टपूर्वः] (११)

**वासवदत्ता**—हला! भणाहि भणाहि, किं दंसणीओ। [हला! भण भण, किं दर्शनीयः।] (१२)

**चेटी**—सअं खु भअवं सरचावहीणो कामदेवोत्ति। [स्वयं खलु भगवान् शरचापहीनः कामदेव इति।] (१३)

---

स्नाप्यते इति च तदर्थः। स्नातेर्ण्यन्तात्कर्मणि ईय् प्रत्यये 'लुगावोक्तभावकर्मसु' इति णेर्लुकि आवि आदेशे कृते रूपद्वयं सिध्यतीत्यलमप्राकृतविचारेण। शीघ्रम् इयं च स्नानानन्तरमेवोपयोक्ष्यत इति सत्वरं गुम्फत्वित्यर्थः।

(८) चिन्तयितुं—शोचितुम्। मम दुर्दैवं विजने च दुःखं शोचितुमप्यवसरं न ददाति, यच्च कारयति तत्कर्तव्यमेवेत्यर्थः। एवमप्यनया सहार्य्यपुत्रगतप्रकृतानुरूपं किमप्यालप्यात्मानं विनोदयामीति पृच्छति—किमिति।

(९) आम्—एवं अथ किमित्यर्थः! सश्रद्धं सादरं च दृष्ट इत्यर्थः।

(१०) कीदृशः—विरूपः सुरूपो वा?

(११) ईदृशो वरः पूर्वं न कदाप्यवलोकित इत्यर्थः।

(१२) अनयोक्त्या तु विरूपोऽप्यवबोद्धुं शक्यत इति विशिष्य पृच्छति हलेति।

(१३) दर्शनीयोऽपि कामः शरचापधरः सन् केषाञ्चिदुद्वेगकरोऽपि भवति अयन्तु न तथेति ततोऽप्यतितमां दर्शनीय इत्यर्थः।

वासवदत्ता—होदु एत्तअं। [ भवत्वेतावत् ।]

चेटी—किण्णिमित्तं वारेसि। [किन्निमित्तं वारयसि ।]

वासवदत्ता—अजुत्तं परपुरुससंकित्तणं सोदुं। [ अयुक्तं परपुरुषसंकीर्तनं श्रोतुम् ।] (१४)

चेटी—तेण हि गुह्मदु अय्या सिग्घं। [तेन हि गुम्फत्वार्या शीघ्रम् ।]

वासवदत्ता—आणेहि ( आत्मगतम् ) इअं गुह्मामि मंदभाआ ( वर्जयित्वा विलोक्य ) इमं दाव ओसहं किं णाम। [ आनय। (आत्मगतम्) इयं गुम्फामि मन्दभागा। (वर्जयित्वा विलोक्य) इदं तावदौषधं किं नाम ।] (१५)

चेटी-अविहवाकरणं णाम। [अविधवाकरणं नाम] (१६)

वासवदत्ता-( आत्मगतम् ) इदं बहुसो गुह्मिदव्वं मम अ पदुमावदीए अ। (प्रकाशम्) इमं दाव ओसहं किं णाम। [(आत्मगतम्) इदं बहुशो गुम्फितव्यं मम च पद्मावत्याश्च। (प्रकाशम्) इदं तावदौषधं किं नाम ।] (१७)

---

(१४) परपुरुषसंकीर्तनम् परकीयस्य पुरुषस्य गुणानुवर्णनम्। साध्वीभिः श्रोतुमनुचितमित्यर्थः ।

(१५) आनय तावत्—गुम्फनसामग्रीमुपनयेत्यर्थः । वर्जयित्वा विलोक्य—गुम्फनसामग्र्यां पुष्पैः सहोपनीतं किमपि विजातीयं वस्तु पृथक् कृत्वा दृष्ट्वा चेत्यर्थः ।

(१६) अविधवाकरणम्—चिरतरसौभाग्यसाधनम् ।

(१७) बहुशः—पुनः पुनः साग्रहमिति यावत्। उभयोरप्यवैधव्यस्येष्टत्वात्तद्गुम्फनं सर्वथावश्यकमित्यर्थः ।

चेटी—सवत्तिमद्दणं णाम। [ सपत्नीमर्दनं नाम। ] (१८)

वासवदत्ता—इदं ण गुह्मिदव्वं। [ इदं न गुम्फितव्यम्। ]

चेटी—कीस। [ कस्मात्। ]

वासवदत्ता—उवरदा तस्स भय्या, त णिप्पआअणं त्ति। [ उपरता तस्य भार्य्या, तन्निष्प्रयोजनमिति। ] (१९)

( प्रविश्यापरा )

चेटी—तुवरदु तुवरदु अय्या। एसो जामादुओ अविहवाहि अभन्तरचउस्सालं पवेसीअदि। [ त्वरतां त्वरतामार्या। एष जामाता अविधवाभिरभ्यन्तरचतुश्शालं प्रवेश्यते। ] (२०)

वासवदत्ता—अइ! वदामि, गह्ण एदं। [ अयि! वदामि, गृहाणैतत्। ] (२१)

चेटी—सोहणं। अय्ये! गच्छामि दाव अहं। [ शोभनम्। आर्यें! गच्छामि तावदहम्। ] (२२) (उभे निष्क्रान्ते)

वासवदत्ता—गदा एसा! अहो अच्चाहिदं, अय्यउत्ता वि

---

(१८) सपत्नीमर्दनं—सपत्न्याः गर्वभञ्जनम्।

(१९) उपरता—नष्टा। निष्प्रयोजनं अनावश्यकम्। कारणवशात् द्वितीयपत्नीग्रहेऽपि मदेकप्राणस्यार्य्यपुत्रस्य पुनः पन्यन्तरपरिग्रहे प्रवृत्तेरसंभव इत्याकूतं सरलहृदयायाः।

(२०) अविधवाभिः—सधवाभिः तादृशीनामेव तत्राधिकारात्।

(२१) अयि वदामीति व्यग्रायाः सम्मुखीकरणम्।

(२२) शोभनं—वरम्। अहमिति प्रधानतया केवलमात्मन एवोल्लेखः।

(२३) एषा गता—एषा प्रथमा चेटी गता। एतदनन्तरमेवार्य्यपुत्रस्योपक्रान्तोऽपि ममोद्वेगकरो विवाहः पर्य्यवसित एवेति प्रगुणितदुःख-

णाम परकेरओ संवुत्तो। अविदा सय्याए मम दुक्खं विणोदेमि, जदि णिद्दं लभामि। [ गतैषा। अहो अत्याहितम्। आर्यपुत्रोऽपि नाम परकीयः संवृत्तः। अविदा शय्यायां मम दुःखं विनोदयामि, यदि निद्रां लभे। ] (२३)

(निष्क्रान्ता)

इति तृतीयोऽङ्कः।

---

## अथ चतुर्थोऽङ्कः।

( ततः प्रविशति विदूषकः )

विदूषकः—( सहर्षम् ) भो ! दिट्ठिआ तत्तहोदो वच्छराअस्स अभिप्पेदविवाहमंगलरमणिज्जो कालो दिट्ठो ! भो ! को

---

भारा पुनरनुशोचति अहो इत्यादि । पूर्वं व्याख्यातमेतत् । यद्यपीदानीं दुःखविनोदमौपयिकं विजनं स्थानं पुनरुपलब्धं किन्तु शोच्यमानं दुःखन्तु न लघूभवति प्रत्युत गुरुतरमेव सम्पद्यत इतीदानीं परमवशिष्यते तादृशी निद्रा, सापि ममाभागिन्या दुर्लभैव, यदि च लभेय तर्ह्यधुना तामेव शरणीकरवाणीत्याह अहमपीति ।

इति तृतीयोऽङ्कः।

---

(१) विदूषक—"विकृताङ्गवचोवेषैर्हास्यकारी विदूषक" इति सुधाकरोक्तलक्षणलक्षितः वसन्तकः।

(२) अभिप्रेतेत्यादि । अभिप्रेतेन चिरमभिमतेन विवाहमङ्गलेन—पद्मावत्याः सह सम्पन्नेन परिणयानन्देन रमणीयः मनोहरः । कालो दृष्टः—समय उपलब्धः भाग्येन प्रत्यक्षीकृत इत्यर्थः । भो इत्याश्चर्ये । को नाम इ[...] जानाति केन खल्वेतद् विज्ञातमासीत् न केनापीत्यर्थः । तादृशे—अतर्कितो[...] पनते महाघोरे अनर्थसलिलावर्त्ते वासवदत्तादाहः राज्यापहारो वा अन[...]

णाम एदं जाणादि—तादिसे वयं अणत्थसलिलावत्ते पक्खिता उण उम्मज्जिस्सामो त्ति। इदाणिं पासादेसु वसीअदि, अन्देउर-दिग्घिआसु ह्णाईअदि, पकिदिमउरसुउमाराणि मोदअखज्जो-आणि खज्जीअन्ति त्ति अणच्छरसंवासो उत्तरकुरुवासो मए अणुभवीअदि। एक्को खु महन्तो दोसो, मम आहारो सुठ्ठु ण परिणमदि। सुप्पच्छदणाए सय्याए णिद्दं ण लभामि, जह वादसोणिदं अभिदो विअवत्तदि त्ति पेक्खामि। भो सुहं णाम-अपरिभूदं अकल्लवत्तं च [ भोः ! दिष्ट्या तत्रभवतो वत्सराज-स्याभिप्रेतविवाहमंगलरमणीयः कालो दृष्टः। भो ! को नामैत-ज्ज्ञानाति—तादृशे वयमनर्थसलिलावर्ते प्रक्षिप्ताः पुनरुन्मंक्ष्याम

---

एव सलिलावर्तः चक्राकारः जलभ्रमः तत्र। प्रक्षिप्ताः दुर्दैवेन कर्त्रा हेतुना वा पातिताः पतिता वा वयं पुनः उन्मङ्क्ष्यामः उन्मग्ना भविष्याम इति। अनवक्लृप्तौ लट्। एतत्पुनरुन्मज्जनमसंभावितमेवासीदित्यर्थः। अत्र राज्ञः पत्न्यन्तरपरिग्रहे प्रवृत्त्या वासवदत्तादाहशोकानर्थनिवृत्तिम्। पद्मावत्या विवाहनिष्पत्तेः सम्भाविनीं राज्यापहाररूपानर्थनिवृत्तिं सिद्धामिव मत्वा विदूषकस्य तथोक्तिरिति बोध्यम्। स्वसुखमेव प्रपञ्चयति इदानीमित्या-दिना। प्रासादेषु राजभवनेषु। अन्तःपुरदीर्घिकासु स्त्रीजनोचितास्वपि वापीषु। प्रकृतिमधुरसुकुमाराणि—प्रकृत्या मधुराणि सुकुमाराणि चर्वणेऽनायासकराणि च मोदकखाद्यादि—मोदकाः लड्डूकाः तत्प्रधानानि खाद्यानि भक्ष्याणि। मोदकप्रियत्वात्तथोक्तिः। अनप्सरः संवासः अविद्य-मानः अप्सरोभिः अप्सरसां वा संवासः सहवासः यत्र सः तदभावमात्र-भिन्नः इत्यर्थः। उदरम्भरेस्तदभावस्याकिञ्चित्करत्वादियमुपेक्षोक्तिः उत्तरकुरुवासः उत्तराः कुरवः देवभूमयः तेष्विव वासः निवासः। आहारः—भुक्तं मोदकादि। सुष्ठु न परिणमति—सम्यक् परिपक्वं न सम्पद्यते। सुप्रच्छदनायां—सु शोभनं प्रच्छदनं दुग्धफेनधवलवसनो-

इति। इदानीं प्रासादेषु उष्यते, अन्तःपुरदीर्घिकासु स्नायते, प्रकृतिमधुरसुकुमाराणि मोदकखाद्यानि खाद्यन्त, इति अनप्सरस्संवास उत्तरकुरुवासो मयानुभूयते। एकः खलु महान् दोषः, मामाहारः सुष्टु न परिणमति, सुप्रच्छदनायां शय्यायां निद्रां न लभे, यथा वातशोणितमभित इव इति प्रेक्षे। भोः सुखं नामयपरिभूतमकल्यवर्तं च।] (२)

( ततः प्रविशति चेटी )

**चेटी**—कहिंणु खु गदो अय्यवसंतओ। (परिक्रम्य) अह्मो एसो अय्यवसंतओ। ( उपगम्य ) अय्य वसंतअ। को कालो, तुम अण्णोसामि। [कुत्र नु खलु गत आर्यवसंतकः। अहो एष आर्यवसंतकः। आर्य वसंतक! कः कालः त्वामन्विष्यामि।] (३)

**विदूषकः**—( दृष्ट्वा ) किंणिमित्तं भद्दे! मं अण्णेससि। [ किंनिमित्तं भद्रे! मामन्वेषसे। ]

---

पस्कृतं कोमलहंसतूलिकाद्यास्तरणं नवनीतमृदुलोपधानं यस्यां तथोक्तायाम्। यथेष्टसुलभनिद्रायामपि शय्यायां निद्रां न लभे—निद्रासुखं न प्राप्नोमि। यथा एवम् एतैः लक्षणैरित्यर्थः वातशोणितं—वातप्रधानं रक्तं यत्र तथाभूतं वातरक्तव्याधिरित्यर्थः अभित इव आसन्नमिव वर्तते इति एवं पश्यामि तर्कयामि। अन्नापरिपाकादीनि लक्षणानि यथा दृश्यन्ते तैः वातरक्तरोगः सद्य एव मां ग्रसिष्यतीत्यहमनुमिनोमीत्यर्थः। स्वयं विलक्षण सुखलक्षणमपि विवृणोति सुखमिति। आमयपरिभूतं रोगग्रस्तं अकल्यवर्तं कल्यवर्तः ( कलेवा, जलखावा ) इति लोकप्रसिद्धः। प्रातराशः तच्छून्यं च सुखं न एवंविधं सुखं च सुखं न परिगण्यत इत्युदरम्भरेराशयः। 'समीपोभयतः शीघ्रसाकल्याभिमुखेऽभित' इत्यमरः।

( ३ ) कः काल इति—त्वामन्विष्यन्त्याः ममातिक्रान्तो बहुकाल इत्यर्थः।

चेटी—अह्माणं भट्टिणी भणादि-अवि ह्लादो जामादुओ त्ति । [अस्माकं भट्टिनी भणति-अपि स्नातो जामातेति ।]

विदूषकः—किंणिमित्तं भोदि ! पुच्छदि । [किन्निमित्तं भवति ! पृच्छति । ]

चेटी—किमण्णं । सुमणोवण्णअं आणेमि त्ति । [किमन्यत् । सुमनोवर्णकमानयामीति । ] (४)

विदूषकः—ह्लादो तत्तभवं । सव्वं आणेदु भोदी वज्जिअ भोअणं । [ स्नातस्तत्रभवान् । सर्वमानयतु भवती वर्जयित्वा भोजनम् । ]

चेटी—किंणिमित्तं वारेसि भोअणं । [किन्निमित्तं वारयसि भोजनम् । ]

विदूषकः-अधण्णस्स मम कोइलाणं अक्खिपरिवट्टो विअ कुक्खिपरिवट्टो संवुत्तो [अधन्यस्य मम कोकिलानामक्षिपरिवर्त इव कुक्षिपरिवर्तः संवृत्तः । ] (५)

चेटी-ईदिसो इव होहि ।.[ ईदृश एव भव । ] (६)

विदूषकः-गच्छदु भोदी । जाव अहं वि तत्तहोदो सआसं गच्छामि । [ गच्छतु भवती । यावदहमपि तत्रभवतः सकाशं गच्छामि । ] (निष्क्रान्तौ) प्रवेशकः ।

---

(ततः प्रविशति सपरिवारा पद्मावती आवन्तिकावेषधारिणी वासवदत्ता च )

चेटी—किंणिमित्तं भट्टिदारिआ पमदवणं आअदा । (किन्निमित्तं भर्तृदारिका प्रमदवनमागता । )

---

( ४ ) सुमनोवर्णकम्—स्रगनुलेपनादि ।

(५) अधन्यस्य—मन्दभाग्यस्य मम कोकिलानां अक्षिपरिवर्त इव नेत्रविकार इव कुक्षिपरिवर्तः उदरविकारः सम्वृत्तः सञ्जातः । परिहासोक्तिः ।

(६) ईदृशरोगग्रस्त एव त्वं भव इति प्रणयशाप इव परिहासः ।

**पद्मावती**—हला ! ताणि दाव सेहालिआगुह्मआणि पेक्खामि कुसुमिदाणि वा ण वेत्ति । [हला ! ते तावत् शेफालिकागुल्मकाः प्रेक्षे कुसुमिता वा न वेति । ] (७)

**चेटी**—भट्टिदारिए ! ताणि कुसुमिदाणि णाम, पवालंतरिदेहिं विअ मौत्तिआलम्बएहिं आइदाणि कुसुमेहिं । [भर्तृदारिके ! ते कुसुमिता नाम, प्रवालान्तरितैरिव मौक्तिकालंबकैराचिताः कुसुमैः । ] (८)

**पद्मावती**—हला ! जदि एव्वं, सिं दाणिं विलम्बेसि । [ हला ! यद्येवं, किमिदानीं विलम्बसे । ] (९)

**चेटी**—तेण हि इमस्सिं सिलावट्टए मुहुत्तअं उपविसदु भट्टिदारिआ । जाव अहं वि कुसुमावअं करेमि । [ तेन ह्यस्मिन् शिलापट्टके मुहूर्तकमुपविशतु भर्तृदारिका । यावदहमपि कुसुमावचयं करोमि । ] (१०)

---

(७) शेफालिकागुल्मकाः—शेफालिकाया ( सम्भालू ) इति लोकप्रसिद्धायाः आढकीसदृश्याः सिन्दुवारलताया गुल्मकाः लघवः स्तम्बाः । कुसुमिताः सञ्जातपुष्पाः सम्भृता न वा इति पश्यामि एतदर्थमेवाहं प्रमदवनमागता इत्यर्थः ।

(८) प्रवालान्तरितैः—प्रवालैः विद्रुमैः अन्तरितैः व्यवहितैः मध्ये मध्ये गुम्फितविद्रुममणिभिरित्यर्थः । मौक्तिकलम्बकैरिव मुक्तामणिग्रथितैः लम्बकैः ललन्तिकाभिधैः कण्ठभूषणैरिव कुसुमैः आचिताः भरिताः व्याप्ता इत्यर्थः । मूलभागे विद्रुमखण्डवद्रक्तानि शेषभागे मुक्तावद्धवलानि सिन्दुवारकुसुमानि भवन्तीति तथा ।

(९) विलम्बसे—तत्पुष्पाणामवचयने विलम्बं मा कुरुषे तानि शीघ्रमवचिन्वित्यर्थः ।

(१०) तेन हि—तर्हि । शिलापट्टके मणिमयफलके । मुहूर्तं क्षणमात्रम् ।

पद्मावती—अय्ये ! किं एत्थ उपविसामो । [आर्ये, किमत्रोपविशावः । ]

वासवदत्ता—एव्वं होदु । [ एवं भवतु । ]

( उभे उपविशतः )

चेटी–(तथा कृत्वा) पेक्खदु पेक्खदु भट्टिदारिआ अद्धमणिसिलावट्टएहिं विअ सेहालिआकुसुमेहिं पूरिअं मे अञ्जलिं। [ पश्यतु पश्यतु भर्तृदारिका । अर्द्धमनश्शिलापट्टकैरिव शेफालिकाकुसुमैः पूरितो मेऽञ्जलिः । ] (११)

पद्मावती—( दृष्ट्वा ) अहो विइत्तदा कुसुमाणं । पेक्खदुपेक्खदु अय्या । [ अहो विचित्रता कुसुमानाम् । पश्यतु पश्यत्वार्या ]

वासवदत्ता—अहो दस्सणीअदा कुसुमाणं [ अहो दर्शनीयता कुसुमानाम् । ]

चेटी–भट्टिदारिए ! किं भूयो अवइणुस्सं । [ भर्तृदारिके ! किं भूयोऽवचेष्यामि । ]

पद्मावती—हला ! मा मां भूयो अवइणिअ । [ हला ! मा मा भूयोऽवचित्य ] । (१२)

वासवदत्ता—हला ! किंणिमित्तं वारेसि । [ हला ! किन्निमितं वारयसि । ]

---

(११) अर्द्धमनःशिलापट्टकैरिव—अर्द्धे पुष्पदलाधोभागे मनःशिलायाः (मैनशिल) इति लोके प्रसिद्धायाः पट्टकैः खण्डैरिव प्रतीयमानैः मनःशिलाखण्डवदरुणप्रथमार्द्धैरित्यर्थः । पूर्वं शेफालिकाकुसुमप्रथमार्द्धः प्रवालखण्डैरुपमितः इह तु मनःशिलाखण्डैरिति विशेषः ।

(१२) मा अवचित्य—इहापि माप्रयोगे पूर्ववदभिमानः ।

**पद्मावती**–अय्यउत्तो इह आअच्छिअ इमं कुसुमसमिद्धिं पेक्खिअ सम्माणिदा भवेअं। [आर्यपुत्र इहागत्येमां कुसुमसमृद्धिं दृष्ट्वा सम्मानिता भवेयम्।] (१३)

**वासवदत्ता**–हला! पिओ दे भत्ता। [हला! प्रियस्ते भर्ता।]

**पद्मावती**—अय्ये! ण आणामि, अय्यउत्तेण विरहिदा उक्कण्ठिदा होमि। [आर्ये! न जानामि, आर्यपुत्रेण विरहितोत्कण्ठिता भवामि।] (१४)

**वासवदत्ता**—(आत्मगतम्) दुक्करं खु अहं करेमि। इअं वि णाम एव्वं मंतेदि। [दुष्करं खल्वहं करोमि। इयमपि मामैवं मन्त्रयते।] (१५)

**चेटी**–अभिजादं खु भट्टिदारिआए मंतिदं-पिओ मे भत्तत्ति। [अभिजातं खलु भर्तृदारिकया मन्त्रितं–प्रियो मे भर्तेति।] (१६)

**पद्मावती**–एक्को खु मे संदेहो। [एकः खलु मे संदेहः।] (१७)

---

(१३) आर्यपुत्र इत्यादि। अत्र "सम्माणिदा भवेअम्" इत्यत्र "सम्माणिदो भवे" इत्येव पाठो युक्तो भवेत्, आत्मसम्मानकामनापेक्षया भर्तृसम्मानकामनाया एवौचित्यात्। कथमन्यथा प्रियस्ते भर्त्तेत्यादिवक्ष्यमाणं प्रश्नोत्तरं सङ्गच्छेत।

(१४) जानामि—प्रियो वा नवेति। इयमुक्तिः स्वाहङ्कारपरिहाराय। उत्कण्ठिता पर्य्युत्सुका। तथात्वस्वान्यथानुपपत्त्या प्रिय एवेति व्यङ्ग्योऽर्थः।

(१५) इयमपि—भर्त्रा सह कियन्त्येव दिनान्युषितापि।

(१६) अभिजातं अभिजनानुरूपम्। भवत्या भर्तृभक्तिः कुलधर्म इत्यर्थः।

(१७) इयमुज्जयिनीभवा तादृश्या वासवदत्ताया भर्तुर्दर्शनीयत्वमिव

वासवदत्ता—किं किं । [ किं किम् । ]

पद्मावती—जह मम अय्यउत्तो, तह एव्व अय्याए वासवदत्ता एत्ति । [ यथा ममार्यपुत्रस्तथैवार्याया वासवदत्ताया इति । ] (१८)

वासवदत्ता—अदो वि अधिअं । [अतोऽप्यधिकम् ](१९)

पद्मावती—कहं तुवं जाणासि । [कथं त्वं जानासि ।]

वासवदत्ता—( आत्मगतम् ) हं, अय्यउत्तपक्खवादेण अदिक्कंदो स मुदाआरो एव्वं दाव भणिस्सं ( प्रकाशम् ) जइ अप्पो सिणेहो सा सजणं ण परित्तजदि । [हंम, आर्यपुत्रपक्ष-

---

तद्विषयिणीं तस्य प्रीतिदशामपि कदाचित् ज्ञातवती भवेदित्याशया तदौपयिकं प्रसङ्गमवतारयति एकः खलु मे सन्देह इति ।

(१८) यथा मम प्रिय इति शेषः । तथैव—तादृश एव अथवा न्यूनं अधिकम् वा ।

(१९) अतोऽप्यधिकम्—यादृशं वासवदत्तायाः प्रियं तं भवती पृच्छति अतोऽपि अधिकम् सः तस्या प्रिय इत्यर्थः ।

(२०) हं—हाधिक् , शेषं प्राग्वत् । अधिकप्रियत्वमेव समर्थयते यदीति । यदि तस्य तस्यां स्नेहोऽल्पो भवति तर्हि सा स्वजनं स्निग्धं मात्रापित्राद्यात्मीयवर्गं न परित्यजति सामान्यस्नेहवता भर्त्रा सहानूढैव न पलायते । पलायिता तु सा इति कृत्वा तस्यां तस्य स्नेहाधिक्यं सुतरां सिध्यतीत्यर्थः अत्र परित्यजतीति तत्काले तामात्मानं च स्थितां मत्वा वर्तमानप्रयोगः । यद्वा हेतुहेतुमतोर्लिङ् (३ । ३ । १५६) इति सूत्रे उक्ताप्योः समर्थयोर्लिङ् ( ३ । ३।१५२ ) सूत्रात् लिङोऽनुवृत्तौ सिद्धायामपि पुनर्लिङ् ग्रहणं कालविशेषप्रतिपत्त्यर्थमिति भविष्यत् काल एवानेन हेतुहेतुमदर्थे वर्तमाना-

पातेनातिक्रान्तः समुदाचारः। एवं तावद् भणिष्यामि । यद्यल्पः स्नेहः, सा स्वजनं न परित्यजति । ] (२०)

**पद्मावती**—होदव्वं । [ भवितव्यम् । ] (२१)

**चेटी**—भट्टिदारिए! साहु भट्टारं भणहि-अहं पि वीणं सिक्खिस्सामि त्ति । [भर्तृदारिके ! साधु भर्तारं भण-अहमपि वीणां शिक्षिष्य इति । ] (२२)

**पद्मावती**—उत्तो मये अय्यउत्तो । [ उक्तो मयार्यपुत्रः । ]

**वासवदत्ता**—तदो किं भणिदं । [ ततः किं भणितम् ।]

**पद्मावती**—अभणिअ किंचिद् दिग्घं णिस्ससिअ तुह्णीआ संवुत्तो । [ अभणित्वा किंचिद् दीर्घं निःश्वस्य तूष्णीकः संवृत्तः । ] (२३)

**वासवदत्ता**—तदो तुवं किं विअ तक्केसि।[ततस्त्वं किमिव तर्कयसि । ]

**पद्मावती**—तक्केसि अय्याए वासवदत्ताए गुणाणि सुमरिअ दक्खिणदाए मम अग्गदो ण रोदिदित्ति । [तर्कयाम्यार्याया वासवदत्ताया गुणान् स्मृत्वा दक्षिणतया ममाग्रतो न रोदितीति । ] (२४)

---

द्धातोर्लिङ्विधानादत्र तथात्वाभावान्न लिङ्लृटौ, क्रियातिपत्तेरविवक्षया लृङपि न किन्तु हन्तीति पलायते इतिवल्लट् इत्यलं पल्लवितेन ।

(२१) भवितव्यम्—युज्यत इत्यर्थः ।

(२२) साधु—सविनयम् । वीणाशिक्षानिबन्धनमेव तस्यां तत्स्नेहाधिक्यमित्यात्मनोऽपि तल्लाभाय तथा प्रार्थयस्वेत्यर्थः ।

(२३) किञ्चित् अभणित्वा नोक्त्वा, दीर्घं निश्वस्य च तूष्णीकः मौनी ।

(२४) दक्षिणतया—सर्वासु पत्नीषु समानुरागतया । तत्स्मरणेन रोदने दाक्षिण्यभङ्गः स्यादिति भिया न रोदितीत्यर्थः ।

**वासवदत्ता**—( आत्मगतम् ) धञ्ञा क्खु ह्मि, जदि एव्वं सच्चं भवे। [ धन्या खल्वस्मि, यद्येवं सत्यं भवेत्। ] (२५)

( ततः प्रविशति राजा विदूषकश्च )

**विदूषकः**—ही ही। पचिअपडिअबंधुजीवकुसुमविरलवादरमणिज्जं पमदवणं। इदो दाव भव। [ ही ही प्रचितपतितबंधुजीवकुसुमविरलपातरमणीयं प्रमदवनम्। इतस्तावत् भवान्। ] ( २६ )

**राजा**—वयस्य वसंतकः ! अयमयमागच्छामि। (२७)

कामेनोज्जयिनीं गते मयि तदा कामप्यवस्थां गते
दृष्ट्वा स्वैरमवन्तिराजतनयां पञ्चेषवः पातिताः।

---

(२५) अस्मीति अहमर्थक विभक्तिप्रतिरूपकमव्ययम्। यदि एवं पूर्वोक्तं सत्यं भवेत् तर्हि अहं धन्या भवेयमिति विभक्तिविपरिणामेनान्वयः। हेतुहेतुमतोर्लिङ्।

(२६) ही ही हर्षे प्राकृतमव्ययम्। प्रचितानां पूर्वं यथेच्छमवचितानां पतितानां शिथिलवृन्ततया स्वयं च भ्रष्टानां वृक्षेषु कियतामेवावशिष्टानां परोपकारादिना क्षीणसमृद्धीनामित्यर्थः। बन्धुजीवकुसुमानां ( दुपहरिया ) इत्याख्यातानां पुष्पाणां विरलेन स्वल्पेनापि पातेन रमणीयं मनोहरम् प्रमदवनं अन्तःपुरोचितमुद्यानं दृश्यत इति शेषः। अत्र "तनिम्ना शोभन्ते गलितविभवाश्चार्थिषु नृपाः" इत्यभियुक्तोक्तेरङ्गानां वृक्षाणां परोपकारादिना क्षीणविभवत्वेऽपि रमणीयत्वमङ्गिनि प्रमदवने उपचरितं बोद्धव्यम्।

(२७) अयमयमिति द्विरुक्त्यात्मनो वासवदत्ताविरहजनितदुःखेन व्यग्रता सूचिता।

(२८) तामेव स्फुटयति कामेन इति। तदा स्वनिग्रहकाले उज्जयिनीं गते, ( मयि तत्र च ) अवन्तिराजतनयां वासवदत्तां स्वैरं यथेच्छं दृष्ट्वा

तैरद्यापि सशल्यमेव हृदयं भूयश्च विद्धा वयं
पञ्चेषुर्मदनो यदा कथमयं षष्ठः शरः पातितः ॥१॥२८

विदूषकः—कहिं णु खु गदा तत्तहोदी पदुमावदी, लदा-मण्डवं गदा भवे, उदाहो असणकुसुमसञ्चिदं वग्घचम्मावगुण्ठिदं विअ पव्वदतिलअं णाम सिलापट्टअं गदा भवे, आदु अधिअ-कडुअगंधसतच्छदवणं पविट्ठा भवे, अहव आलिहिदमिअ-पक्खिसकुलं दारुपव्वदअ गदा भवे (ऊर्ध्वमवलोक्य) ही ही सरअकालाणिम्मले अन्तरिक्खे पसारिअवलदेववाहुदंसणीअं सारसपन्तिं जाव समाहिदं गच्छन्ति पेक्खदु दाव भवं। [कुत्र नु खलु गता तत्रभवती पद्मावती, लतामण्डपं गता भवेत्,

---

काममपि अकथनीयाम् अवस्थां दशां कामपरवशतामिति यावत् गते प्राप्ते च मयि कामेन मदनेन पञ्चापि इषवः बाणाः पातिताः निखाताः। तैः पञ्चभिरपि इषुभिः (मम) हृदयं अद्यापि सशल्यमेव अस्ति। मद्हृदया-द्ययावत्ते न निर्गता इत्यर्थः। भूयश्च पुनरपि वयं विद्धाः व्यथिताशेष-बाणेनापि कामेन शरेण छिद्रिताः। यदा मदनः पञ्चेषुः पञ्चबाण एव ते चाद्यावधि मम हृदये एव प्रोथिताः सन्ति तदा अयं षष्ठः शरः कथं कुतो लब्ध्वा पातितः? वासवदत्ताविश्लेषपीडितमपि मा पीडयितुमकरुणः कामः स्वनिर्बन्धं न त्यजतीत्यर्थः छिद्रेष्वनर्थाः बहुलीभवन्तीति भावः।

(२९) वयस्यस्य प्रकृतपीडोपशमनौपयिकभेषजभूतां पद्मावतीमन्वि-ष्यन् विदूषकः तद्विषये तर्कमुपक्षिपति कुत्रेति। असनकुसुमसञ्चितं असनाः व्याघ्रचर्मसदृशशवलकुसुमाः (आसन) इति प्रसिद्धाः सर्जतरवः तेषां परितो लग्नानां तादृशैः पुष्पैः सञ्चितमाच्छन्नम्। अतएव व्याघ्रचर्मणा अवगुण्ठितमिव चित्रेणावगुण्ठनपटेनावृतमिव प्रतीयमानम्। तादृशं पर्वत-तिलकं नाम तदाख्यया प्रसिद्धं शिलाफलकम्। अथवा अधिककटुगन्ध-सप्तच्छदवनम्—अधिकं कटुकः गन्धः श्रुतदुग्धामोदः येषां ते।

उताहो असनकुसुमसञ्चितं व्याघ्रचर्मावगुण्ठितमिव पर्वततिलकं नाम शिलापट्टकं गता भवेत् , अथवा अधिककटुकगंधसप्तच्छदवनं प्रविष्टा भवेत् , अथवा लिखितमृगपक्षिसंकुलं दारुपर्वतकं गता भवेत्। ( ऊर्ध्वमवलोक्य ) ही ही शरत्कालनिर्मलेऽन्तरिक्षे प्रसारितबलदेवबाहुदर्शनीयां सारसपंक्तिं यावत् समाहितां गच्छन्तीं प्रेक्षतां तावद्भवान्। ] (२९)

राजा—वयस्य, पश्याम्येनाम् ( ३० )

ऋज्वायतां च विरलां च नतोन्नतां च
सप्तर्षिवंशकुटिलां च निवर्तनेषु।

---

गन्धस्येत्वें तदेकान्तग्रहणान्नेत्वम् । तथोक्तानां सप्तच्छदानां ( छतिवंध ) इति प्रसिद्धानां तरूणां वनं तत्प्रधानं प्रमदवनैकदेशम् । उभयत्रापि व्याघ्रभीत्याधिककटुकगन्धेन च गमनाभावमुत्प्रेक्ष्याह अथवा आलिखितमृगपक्षिसंकुलं आलिखितैः चित्रन्यस्तैः मृगैः पक्षिभिश्च संकुलं आकीर्णं व्याप्तं मनोहरमित्यर्थः । दारुपर्वतकं दारुभिः काष्ठैः निर्मितं कृत्रिमं क्षुद्रं सुखारोहणम् पर्वतम् गता भवेत् । एवं प्रकृतौपयिकविलम्बितदर्शनां पद्मावतीं तत्रानुपलभ्य दुःखिनं राजानं विनोदयितुकामो विनोदान्तरं तावदुपक्षिपति ही हीति । सद्यो विनोदान्तरोपलब्धिजनितः हर्षः । प्रसारितबलदेवबाहुदर्शनीयाम्—उभयतो विस्तारितबलभद्रबाहुवत् दर्शनीयां प्रेक्षणीयां व्यायतां धवलां चेत्यर्थः । सारसपङ्क्तिम् हंसश्रेणीं यावत् शाकल्येन समाहितं यथा तथा—सर्वथा श्रेणीभूय, श्रेणीभङ्गमकृत्वा चेत्यर्थः । तथा गच्छन्तीं । शरदागमे मानसाद्दक्षिणां दिशमभिपतन्तीमित्यर्थः । तावत् वाक्यालङ्कारार्थः यावत् पद्मावती न मिलति तावदेवमेव मनो विनोदयतु भवानिति तु हृदयम् ।

३० पश्याम्येनामिति श्लोकान्वयि ।

(३१) ऋज्वायतां—ऋज्वीं सरलाम् आयतां विस्तृतां च विरलां—

निर्मुच्यमानभुजगोदरनिर्मलस्य
सीमामिवांबरतलस्य विभज्यमानाम् ॥२॥(३१)

चेटी—पेक्खदु पेक्खदु भट्टिदारिआ एदं कोकणदमालापंड-रमणीअं सारसपन्ति जाव समादिहं गच्छंतिं। अस्मो भट्टा। [प्रेक्षतां प्रेक्षतां भर्तृदारिका एतां कोकनदमालापाण्डुररमणीयां सारसपंक्ति यावत् समाहितं गच्छन्तीम्। अस्मो भर्ता।] (३२)

पद्मावती—हं अय्यउत्तो। अय्ये! तव कारणादो अय्य-उत्तदंसणं परिहरामि। ता इमं दाव माहवीलदामण्डवं पवि-

---

तन्वीम्। नतोन्नतां क्वचित् नतां नीचां कुत्रचित् वा उन्नताम् उच्चां च। निवर्तनेषु—वामे दक्षिणे वा वक्रीभूय गमनेषु सर्पवंशकुटिलां च सर्पवंशः सर्पमण्डलन्तद्वत् कुटिलां वक्रसंस्थानां च क्वचित् सरलां क्वचित् नीचां क्वचिदुच्चां क्वचिद्वक्राकारां चेत्यर्थः। अतएव निर्मुच्यमानभुजगोदरनिर्मलस्य—निर्मुच्यमानस्य निर्मोकात् (केंचुल) इति प्रसिद्धात्सर्पत्वच सद्यो मुक्तिं भजतः सद्यो निर्मुक्तकञ्चुकस्येत्यर्थः। भुजगस्य सर्पस्योदरवत् निर्मलस्य अम्बरतलस्य शरदाध्वस्तमेघपटलस्याकाशमण्डलस्य विभज्यमानां विभक्तां भवन्तीं आकाशस्य दक्षिणोत्तरभागद्वयमध्ये निबध्यमानामित्यर्थः तथोक्तां सीमामिव प्रतीयमानाम् एनां सारसपङ्क्तिं पश्यामि। सीमा प्रायस्तादृश्येव भवतीति तथोक्तिः।

(३२) पर्य्युत्सुकं राजानं विदूषकवत् पूर्वं "अय्यउत्तेण विरहिदा उक्कण्ठिदा होमि" इत्युक्त्वा पर्य्युत्सुकां पद्मावतीमपि तावद्विनोदयितुं चेटी प्रयतते पश्यत्विति। कोकनदपाण्डुररमणीयां—कोकनदवत् पुण्डरीकवत् पाण्डुरां धवलां रमणीयां च। अत्र कोकनदशब्दः रक्तकमलपरोऽप्यौचित्यात् श्वेताम्बुजपरो बोध्यः। शेषं पूर्ववत्। अहो भर्ता—उपस्थित इति शेषः।

सामो । [ हम् । आर्यपुत्रः । आर्ये ! तव कारणादार्यपुत्रदर्शनं परिहरामि । तदिमं तावन्माधवीलतामण्डपं प्रविशावः ।] (३३)

वासवदत्ता—एव्वं होदु । [ एवं भवतु । ]

[ तथा कुर्वन्ति ]

विदूषकः—तत्तहोदी पदुमावती इह आअच्छिअ णिग्गदा भवे । [ तत्रभवती पद्मावती इहागत्य निर्गता भवेत् । ] (३४)

राजा—कथं भवान् जानाति ।

विदूषकः—इमाणि अवइदकुसुमाणि सेफालिआगुच्छआणि पेक्खदु दाव भवं । [ इमानवचितकुसुमान् शेफालिकागुच्छान् प्रेक्षतां तावद्भवान् । ] (३५)

राजा—अहो विचित्रता कुसुमस्य वसन्तक ! (३६)

वासवदत्ता—(आत्मगतम्) वसन्तअसंकित्तणेण अहं पुण

---

(३३) तव कारणात्—यतो भवती परपुरुषदर्शनं नेच्छति, ततो हेतोः । आर्य्यपुत्रदर्शनं—स्वेष्टमप्यार्यपुत्रस्य दर्शनम् कर्मषष्ठ्या समासः ।

(३४) अद्यापि पद्मावतीमनुपलभ्य तर्कयति—तत्रेत्यादि । आगता त्ववश्यं भवेत् किन्तु चिरायितं भवन्तमत्राहष्ट्वा निर्गता भवेदित्यर्थमनुमिनोमीत्यर्थः ।

(३५) अवचितकुसुमान्—अवचितानि त्रौटयित्वा कियन्ति संगृहीतानि कुसुमानि येभ्यस्तथोक्तान् शेफालिकाया गुच्छकान् पुष्पस्तबकान् भवान् पश्यतु । पद्मावत्या अतिप्रयत्नेन सम्वर्धितायाः अस्याः चिरप्रतीक्षितानि प्रथमोद्गतानि च कुसुमानि नान्योऽवचेतुमर्हतीति तस्या आगमनं भवत्प्रतीक्षया पुष्पावचयेन समययापनमदृष्ट्वा च निर्गमनमहं तर्कयामीत्यर्थः ।

(३६) विचित्रता—तादृशविविधवर्णवैचित्र्यम् ।

(३७) तत्र स्थितिकाले बहुशस्तथा तन्नामश्रवणस्याऽसम्भवेऽपि कालेन

जाणामि उज्जइणीए वत्तामि त्ति। [वसन्तकसंकीर्तनेनाहं पुनर्जानामि उज्जयिन्यां वर्ते इति।] (३७)

राजा—वसंतक! अस्मिन्नेवासीनौ शिलातले पद्मावतीं प्रतीक्षिष्यावहे। (३८)

विदूषकः—भो तह (उपविश्योत्थाय) ही ही सरअकालतिक्खो दुस्सहो आदवो। ता इमं दाव माहवीमण्डवं पविसामो। भोस्तथा (उपविश्योत्थाय) हो ही शरत्कालतीक्ष्णो दुःसह आतपः। तदिमं तावन्माधवीमण्डपं प्रविशावः।] (३९)

राजा—बाढम्। गच्छाग्रतः। (४०)

विदूषकः—एव्वं होदु। [एवं भवतु।]

(उभौ परिक्रामतः)

पद्मावती—सव्वं आउलं कत्तुकामो अय्यवसन्तओ। किं दाणिं करेम्ह। [सर्वमाकुलं कर्तुकाम आर्यवसन्तकः। किमिदानीं कुर्मः।] (४१)

---

गुरुशिष्ययो रहः प्रणये सम्भृते विस्रब्धाया वासवदत्ताया विदिते च सर्वरहस्ये मिथोविस्रम्भालापगोष्ठीषु तथा संकीर्तनश्रवणं नासम्भवीति तथोक्तिर्बोध्या।

(३८) प्रकृतो हेतुरन्यथासिद्धोऽपि भवितुमर्हति, किं च तथा निर्गतापि तत्र मामनुपलभ्य पुनरिहागमिष्यतीति सम्भाव्याह—वसंतकेत्यादि। प्रतीक्ष्यावहे प्रतिपालयावः।

(३९) माधवीलतामण्डपे सम्भावितगमनायाः पद्मावत्याः पाक्षिक दर्शनं स्पष्टमनुक्त्वा प्रवेष्टुं व्याजमुपक्षिपति हीहीति।

(४०) बाढम्—अभ्युपगमो वरम् एवं भवत्वित्यर्थः।

(४१) सर्वम् आकुलं कर्तुकामः—मन्न्यासभूताया आर्य्यावन्तिकायाः परपुरुषदृष्टिपातादेरुपघातात्परिरक्षणं मयाङ्गीकृतं तच्च मम सर्वं सर्वस्वभतं

चेटी—भट्टिदारिए ! एदं महुअरपरिणिलीणं ओलंबलदं ओधूय भट्टारं वारइस्सं । [भर्तृदारिके ! एतां मधुकरपरिनिलीनामवलम्बलतामवधूय भर्तारं वारयिष्यामि । ] (४२)

पद्मावती—एव्वं करेहि । [एवं कुरु । ]

( चेटी तथा करोति । ) ( ४३ )

विदूषकः—अविह अविह; चिट्ठदु चिट्ठदु दाव भवं । [अविह अविह, तिष्ठतु तिष्ठतु तावत् भवान् । ] (४४)

राजा—किमर्थम् ?

विदूषकः—दासीएपुत्तेहि महुअरेहि पीडिदो ह्मि । [दास्याः पुत्रैर्मधुकरैः पीडितोऽस्मि । ] (४५)

---

आर्य्यवसन्तकः आकुलं व्यस्तं कर्तुकामः आर्यपुत्रमिह प्रवेश्य भ्रष्टं कर्तुमुद्यत इत्यर्थः । किमिदानीं कुर्म्मः—आर्य्यपुत्रं प्रवेशात् कथं वारयामः ?

(४२) एताम्—इमां मधुकरपरिनिलीनां-भ्रमरैः स्वच्छन्दमालिङ्गितां अवलम्बलतां तवाधारभूताम् एताम् इमां माधवीलतां अवधूय कम्पयित्वा भ्रमरानुद्वेज्य भर्तारं वारयिष्यामि अन्तःप्रवेशाद्विरतं करिष्यामि तथा सति भर्ता भ्रमरबाधाभिया नान्तः प्रवेक्ष्यति, यदि चैतद्भवत्यै रोचते तर्हि तथा-कर्त्तुं मामादिशत्विति भावः ।

(४३) तथा करोति—अवलम्बलतामवधूय भ्रमरानुद्वेजतीत्यर्थः ।

(४४) हा धिक् हा धिक् ! तिष्ठतु तिष्ठतु तावद्भवान्—सद्यो मा प्रविशत्वित्यर्थः ।

(४५) दास्याः पुत्रैः—जारजातैः । आक्रोशे षष्ठ्या अलुक् । अहमद्यै-वैतान् प्रवेशपरिपन्थिनः शास्मीति भावः ।

**राजा**—मा मा भवानेवम्। मधुकरसंत्रासः परिहार्यः। (४६) पश्य,

**मधुमदकला मधुकरा मदनार्ताभिः प्रियाभिरुपगूढाः।**
**पादन्यासाविषण्णा वयमिव कान्तावियुक्ताःस्युः३(४७)**

तस्मादिहैवासिष्यावहे। (४८)

**विदूषकः**—एव्वं होदु। [ एवं भवतु। ]

( उभावुपविशतः। )

**चेटी**—भट्टिदारिए! रुद्धा खु ह्म वयं [ भर्तृदारिके, रुद्धाः खलु स्म वयम्। ] (४९)

**पद्मावती**—दिट्ठिआ उवविट्ठो अय्यउत्तो [ दिष्ट्योपविष्टः आर्यपुत्रः। ] (५०)

---

(४६) मा मा भवानेवं—एवं भ्रमरशासनं मा करोत्वित्यर्थः। मधुकरसन्त्रासः भ्रमराणां शासनेनोद्वेगः परिहार्य्यः न कार्य्यः।

(४७) मधुमदकलाः—मकरन्दपानमदेनाव्यक्तमधुरं गुञ्जन्तः रतिप्रार्थनां कुर्वाणा इत्यर्थः। अतएव मदनार्ताभिः कामार्दिताभिः रिरंसुभिरिति यावत्। प्रियाभिः मधुकरीभिः उपगूढा आलिङ्गिताः। यद्वा मधुमदेन कलाः शिथिलशक्तयः मदपरवशाङ्गत्वात् पिपतिषव इत्यर्थः प्रियाभिः उपगूढाः आलिङ्ग्य धृताः दत्तावलम्बा इति यावत्। इत्थंभूता मधुकराः भ्रमराः पादन्यासेन प्रवेशार्थं चरणक्षेपेण तच्छब्दश्रवणेनेत्यर्थः विषण्णा विषादमुपगता उद्विग्ना सन्त इत्यर्थः। वयमिव कान्ताभिः वियुक्ताः विरहिताः भवेयुः। प्रियाविरहदुःखमर्मज्ञोऽहं तानपि तथा कर्तुं नेच्छामीत्यर्थः।

(४८) इहैवासिष्यावहे—मण्डपाद्बहिश्शिलापट्टक एवोपवेक्ष्यावः।

(४९) रुद्धाः—यद्यपि ममोपायेन न दृष्टास्तथापीदानीं द्वारोपरोधादवरुद्धाः सम्वृत्ताः। भक्षितेऽपि लशुने न व्याधिशान्तिरिति भावः।

(५०) उपविष्टः नत्वन्तः प्रविष्टः। एतदेवेदानीं ममाभीष्टमासीदिति भावः।

**वासवदत्ता**—( आत्मगतम् ) दिट्ठिआ पकिदित्थसरीरो अय्यउत्तो। [ दिष्ट्या प्रकृतिस्थशरीर आर्यपुत्रः। ] (५१)

**चेटी**—भट्टिदारिए। सस्सुपादा खु अय्याए दिट्ठी। [भर्तृदारिके! साश्रुपाता खल्वार्याया दृष्टिः। ] (५२)

**वासवदत्ता**—एसा खु महुअराणं अविणआदो कासकुसुमरेणुणा पडिदेण सोदआ मे दिट्ठी। [ एषा खलु मधुकराणामविनयात् काशकुसुमरेणुना पतितेन सोदका मे दृष्टिः। ] (५३)

**पद्मावती**—जुज्जइ। [युज्यते।]

**विदूषकः**—भो! सुण्णं खु इदं पमदवणं। पुच्छिदव्वं किंचिअत्थि पुच्छामि भवन्तं। [भोः शून्यं खल्विदं प्रमदवनम्। प्रष्टव्यं किंचिदस्ति। पृच्छामि भवन्तम्। ] (५४)

**राजा**—छन्दतः! (५५)

**विदूषकः**—का भवदो पिआ, तदाणिं तत्तहोदी वासवदत्ता इदाणिं पदुमावदी वा। [ का भवतः प्रिया, तदानीं तत्रभवती वासवदत्ता इदानीं पद्मावती वा। ] (५६)

---

(५१) प्रकृतिस्थशरीरः—सुस्थदेहः अहो मे भाग्यमिति भावः।

(५२) भर्तुः सुस्थशरीरसन्दर्शनेनानन्दाश्रुपरिप्लुतनयनामावन्तिकामवलोक्याह—भर्त्रीति। साश्रुपाता—अश्रुपातेन सहिता। एवमपीहावरोधेनार्या खिद्यतीति भावः।

(५३) एवमपि पद्मावती कदाचित् खिद्येदिति स्वाश्रुपातकारणमन्यथयति एषेत्यादिना। एषा मे दृष्टिः। मधुकराणामविनयात्—चाञ्चल्यात्—परिभ्रमणवेगाघातेनाणुपदार्थानामितस्ततो विकिरणरूपाद्दौष्ट्यादित्यर्थः। आपतितेन काशकुसुमरेणुना सोदका सास्रा सम्वृता न तु रोधदैन्येनेति भावः।

(५४) अथ विदूषकः विनोदान्तरमारभते भो इति।

(५५) छन्दतः—स्वच्छन्दं पृच्छ।

(५६) प्रिया—वल्लभा। तदानीं—पूर्वम्। इदानीं—अद्य।

**राजा**—किमिदानीं भवान् महति बहुमानसङ्कटे मां न्यस्यति । (५७)

**पद्मावती**—हला ! जादिसे सङ्कडे निक्खित्तो अय्यउत्तो । [हला ! यादृशे संकटे निक्षिप्त आर्यपुत्रः । ] (५८)

**वासवदत्ता**—( आत्मगतम् ) अहं अ मन्दभाआ । [अहं च मन्दभागा । ] (५९)

**विदूषकः**—सेरं सेरं भणादु भवं । एक्का उवरदा, अवरा असण्णिहिदा । [स्वैरं स्वैरं भणतु भवान् । एकोपरता, अपरा असन्निहिता । ] (६०)

**राजा**—वयस्य ! न खलु ब्रूयाम् । भवांस्तु मुखरः । (६१)

**पद्मावती**—एत्तएण भणिदं अय्यउत्तेण । [ एतावता भणितमार्यपुत्रेण । ] (६२)

---

(५७) बहुमानसङ्कटे—का बहुमतेतीदृशे सङ्कटे उभयतः पाशारज्जुरूपे महति कष्टे । न्यस्यति—पातयति ।

(५८) हला आर्ये ! यादृशे—अत्र 'तादृशे' इत्येव युक्तः पाठो भवेत् । तादृशे—अनिर्वचनीये महतीत्यर्थः ।

(५९) अहमपि मन्दभागा—तादृशे सङ्कटे निक्षिप्ता मम कथनसङ्कटे आर्य्यपुत्र इवाहमपि मन्दभाग्या श्रवणसङ्कटे निक्षिप्तेत्यर्थः ।

(६०) स्वैरं—निश्शङ्कम् । एका वासवदत्ता उपरता नष्टा । अपरा-पद्मावती असन्निहिता सन्निधौ नास्तीत्यर्थः ।

(६१) मुखरः—अनर्गलमुखः असंयतजिह्वः इति यावत् । यामहमप्रियां प्रियां वा कथयामि तां प्रति मुखरस्त्वं सद्य एव प्रकाशयेरिति तथा नैव ब्रूयामिति भावः ।

(६२) एतावता भणितमार्यपुत्रेण—एतावता—विदूषकस्य मुखरत्व-कथनेनैवार्यपुत्रेण भणितं स्वाभिमतमुत्तरं कथितम् मद्गताप्रियत्वकथन

विदूषकः—भो ! सच्चेण सवामि, कस्स वि ण आचक्खिस्सं। एसा सन्दट्ठा मे जीहा। [भोः ! सत्येन शपामि, कस्यापि नाख्यास्यामि। एषा संदष्टा मे जिह्वा। ] (६३)

राजा—नोत्सहे सखे वक्तुम्।

पद्मावती—अहो इमस्स पुरोभाइदा। एत्तिएण हिअअं ण जाणादि। [अहो अस्य पुरोभागिता। एतावता, हृदयं न जानाति। ] (६४)

विदूषकः—किं ण भणादि मम। अणाचक्खिअ इमादो सिलावट्टआदो ण सक्कं एक्कपदं वि गमिदुं। एसो रुद्धो अत्तभवं। [ किं न भणति मम। अनाख्यायास्माच्छिलापट्टकान्न शक्यमेकपदमपि गन्तुम्। एष रुद्धोऽत्रभवान्। ]

राजा—किं बलात्कारेण ?

विदूषकः—आम, बलक्कारेण। [आम् बलात्कारेण।] (६५)

---

एव तादृशशङ्कायाः सम्भवात्, ततश्चोपरतायां वासवदत्तायां तादृशशङ्कायाः अकिञ्चित्करत्वात्सैव सदा प्रियेत्यार्य्यपुत्रेण प्रकाशितप्रायमिति भावः।

(६३) सत्येन शपामि—यदि कस्याप्याख्यास्ये तर्हि निजसत्यनाशमजनितं कुफलमहं भोक्ष्ये इत्येवं सत्यं प्रतिभुवं कृत्वा शपथं करोमि कस्यापि नाख्यास्ये इति। एषा मे जिह्वा सन्दष्टा—दन्तैः सन्दश्य तत्कथनेऽक्षमा कृता कीलितेत्यर्थः।

(६४) अस्य—आर्य्यवसन्तकस्य पुरोभागिता अद्यापि न कथयतीति दोषैकदर्शित्वं परहृदयभावाभिज्ञाने मूर्खतया हठधर्मित्वमित्यर्थः एतावता—अस्यैव मूर्खत्वशङ्कया वक्तुं भृशमनङ्गीकारेण, हृदयम् आर्यपुत्रस्य हृद्गतं भावं न जानातीत्यहोमूर्खतास्येत्यर्थः।

(६५) आम—एवं बलात्कारेणैव।

राजा—तेन हि पश्यामस्तावत्। (६६)

विदूषकः—पसीददु पसीददु भवं। वयस्सभावेण सा-विदो सि, जइ सच्चं ण भणसि। [प्रसीदतु प्रसीदतु भवान्। वयस्यभावेन शापितोऽसि, यदि सत्यं न भणसि।] (६७)

राजा—का गतिः। श्रूयताम्। (६८)

पद्मावती बहुमता मम यद्यपि रूपशीलमाधुर्यैः।
वासवदत्ताबद्धं न तु तावन्मे मनो हरति ॥४॥ (६९)

वासवदत्ता—(आत्मगतम्)भोदु भोदु दिण्णं वेदणं इमस्स परिखेदस्स। अहो अञ्ञादवासं पि एत्थ बहुगुणं सम्पज्जइ।

---

(६६) तेन हि पश्यामस्तावत्—व्याहारयितुं भवानिव न व्याहर्तुमहमपि सन्नद्ध इत्यत्र को विजयते इति प्रत्यक्षीकुर्म इत्यर्थः। अत्र बलप्रयोगो निष्फल इति भावः।

(६७) प्रसीदतु—मह्यं मा कुप्यतु। यदि सत्यं न वदसि तर्हि आवयोः सख्यं नश्यत्वित्येवं शपथं कारितोऽसि। अतः सत्यं वदतु भवानित्यनुनयामीत्यर्थः।

(६८) का गतिः—इदानीं कथयितुमेवापतितम्।

(६९) पद्मावती रूपशीलमाधुर्य्यैः मम बहुमता प्रीतिभाजनभूता यद्यपि अस्ति एव तु किन्तु वासवदत्तावद्धं—वासवदत्तया अलौकिकैर्निजगुणैः स्वायत्तीकृतं मम मनः हृदयं तावत् इदानीं तस्यामुपरतायामपि न हरति तत आच्छिद्य स्वायत्तं न करोतीत्यर्थः। वासवदत्ताप्रेमपरवशोऽहं वक्तुमनिच्छन्नपि त्वन्निर्बन्धादेवं भूतार्थं ब्रवीमि ननु पद्मावतीमधरीकर्तुमिति भावः।

(७०) भवतु भवतु—एतदेवाहमिच्छामि। अस्य परिखेदस्य "नानिवेद्य प्रकुर्वीत भर्तुः किञ्चिदपि स्वयम्। कार्य्यमापत्प्रतीकारादन्यत्र जगतीपते" रित्युक्तरूपाया अनिवेद्यापि स्वामिन आपत्प्रतीकारौपयिकतया क्रियमाणायाः प्रियविश्लेषविषमायाः प्रवासलक्षणायाः सेवायाः वेतनं दत्तं

[भवतु भवतु दत्तं वेतनमस्य परिखेदस्य । अहो अज्ञातवासोऽप्यत्र बहुगुणः संपद्यते । ] (७०)

चेटी—भट्टिदारिए । अदक्खिण्णो खु भट्टा । [भर्तृदारिके ! अदाक्षिण्यः खलु भर्ता । ] (७१)

पद्मावती—हला ! मा मा एव्वं । सदक्खिण्णो एव्व अय्यउत्तो जो इदाणिं वि अय्याए वासवदत्ताए गुणाणि सुमरदि । [हला ! मा मैवम् । सदाक्षिण्य एवार्यपुत्रः, य इदानीमप्यार्याया वासवदत्ताया गुणान् स्मरति । ] (७२)

वासवदत्ता—भद्दे ! अभिजणस्स सरिसं मन्तिदं । [भद्रे ! अभिजनस्य सदृशं मन्त्रितम् । ] (७३)

राजा—उक्तं मया । भवानिदानीं कथयतु । का भवतः प्रिया तदा वासवदत्ता, इदानीं पद्मावती वा ? (७४)

पद्मावती—अय्यउत्तो वि वसन्तओ संवुत्तो । [ आर्यपुत्रोऽपि वसन्तकः संवृत्तः । ] (७५)

---

मदेकप्रियत्वानुवर्तनकथनरूपा भृतिः अर्पिता ! अत्र—पद्मावत्या निकटे । बहुगुणः—भर्तुरभीप्सितसिद्ध्यौपयिकमूलसंघटनं मम च विप्रलम्भेनात्मनि भर्तुः प्रेमाधिक्यसम्पत्तिश्चेत्याद्यनेकफलकः परिणमतीत्यर्थः ।

(७१) अदाक्षिण्यः—सकलमहिलासु समानुरागरूपेण दाक्षिण्यगुणेन हीनः ।

(७२) इदानीमपि—तस्यां नष्टायामपि ।

(७३) अभिजातस्य—स्वोत्तमकुलस्य अनुरूपं मन्त्रितं कथितम् । प्रशस्तकुलजातानां पत्नीनां पत्युः निर्दोषत्वसमर्थनमेव शोभत इति भावः ।

(७४) एवं स्वहृद्गतभावं प्रकाश्य मुखरस्य विदूषकस्य हस्ते पतितो राजा तमपि तथैव स्वहस्तपतितं कर्तुं प्रश्नमुपन्यस्यति उक्तमित्यादिना ।

(७५) आर्यपुत्रोऽपि वसन्तकः सम्वृत्तः—स इवेदानीं स्वयमपि तथा प्रष्टुमारब्धः । संसर्गजा दोषगुणा भवन्तीति भावः ।

**विदूषकः**—किं मे विप्पलविदेण । उभओ वि तत्तहोदीओ मे बहुमदाओ । [ किं मे विप्रलपितेन । उभे अपि तत्रभवत्यौ मे बहुमते । ] (७६)

**राजा**—वैधेय ! मामेवं बलाच्छ्रुत्वा किमिदानीं नाभिभाषसे । (७७)

**विदूषकः**—किं मं पि बलक्कारेण । [ किं मामपि बलात्कारेण । ] (७८)

**राजा**—अथ किम्, बलात्कारेण ।

**विदूषकः**—तेण हि ण सक्कं सोदुं । [ तेन हि न शक्यं श्रोतुम् । ]

**राजा**—प्रसीदतु प्रसीदतु महाब्राह्मणः । स्वैरं स्वैरमभिधीयताम् । (७६)

**विदूषकः**—इदाणिं सुणादु भवं । तत्तहोदी वासवदत्ता मे बहुमदा । तत्तहोदी पदुमावदी तरुणी दस्सणीआ अकोवणा अणहंकारा महुरवाआ सदक्खिण्णा । अअं च अवरो महंतो गुणो, सिणिद्धेण भोअणेण मं पच्चुग्गच्छइ । [ इदानीं शृणोतु भवान् । तत्रभवती वासवदत्ता मे बहुमता । तत्रभवती पद्मावती

---

(७६) विप्रलपितेन—वृथाविरुद्धप्रलापेन ।

(७७) वैधेय—मूर्ख ! माम् एवं—निरुध्य पृष्ट्वा चेत्यर्थः ।

(७८) मामपि निरुध्य । भापयित्वा श्रोतुमिच्छसीति वाक्यशेषः ।

(७९) महाब्राह्मणः—अत्र ब्राह्मणशब्दात्पूर्वं निषिद्धोऽपि महच्छब्दः प्रसादनाय वैधेयस्य महत्वं बोधयितुं प्रयुक्तः ।

(८०) सामान्येन—वासवदत्तां बहुमतामुक्त्वा सशङ्कः पद्मावत्या अपि गुणान् वर्णयति तत्रभवती पद्मावतीत्यादिना । एतैर्गुणविशेषैरेषापि बहुमतेति वक्तुं शक्यमिति गूढोऽभिसन्धिः कपटपटोर्वटोः । एते तु गुणा

तरुणी दर्शनीया अकोपना अनहङ्कारा मधुरवाक् सदाक्षिण्या। अयञ्चापरो महान् गुणः, स्निग्धेन भोजनेन मां प्रत्युद्गच्छति वासवदत्ता—कुत्र नु खलु गत आर्यवसंतक इति। (८०)

**वासवदत्ता**—भोदु भोदु, वसन्तअ! सुमरेहि दाणिं एदं। [भवतु भवतु वसन्तक! स्मरेदानीमेताम्।] (८१)

**राजा**—भवतु भवतु वसन्तक! सर्वमेतत् कथयिष्ये देव्यै वासवदत्तायै। (८२)

**विदूषकः**—अविदा वासवदत्ता। कहिं वासवदत्ता। चिरा खु उवरदा वासवदत्ता। [अविदा वासवदत्ता। कुत्र वासवदत्ता। चिरात्तु खलूपरता वासवदत्ता।] (८३)

---

वासवदत्तायामपि सन्तीत्थपरितुष्यन्निवास्याः स्त्रीयोदरम्भरित्वानुगुणं गुणान्तरमप्याह अयं चेत्यादिना।

(८१) भवतु भवतु—अलमलं मम बहुमतात्वसमर्थनेन। जानेऽहं तव हृदयम्। किन्तु इदानीं—ममासन्निधानदशायाम् एतां पद्मावतीमेव स्मर वर्तमानकाले इयमेव तव तादृशमनोरथं पूरयितुं समर्थेति अस्याः एव गुणांस्तावद्वर्णयेति भावः। अथवा एतां—अद्यैव युवाभ्यां बहुमतात्वेनाभिप्रेतां मां, यद्वा एतत् तादृशं मम बहुमतात्वम् इदानीं मयि विप्रोषितायां परिणीतायां च नववध्वा संभावितविस्मरणं स्मर यथार्य्यपुत्रो न विस्मरेत्तथानुध्यायस्व स्मर्तुं स्मारयितुं च प्रयतस्वेत्यर्थः।

(८२) भवतु भवतु—पद्मावत्या बहुमतात्वसम्भावनासमर्थकैः त्वदुपवर्णितैस्तद्गुणैस्तवाभिमतप्रायं तस्या अपि बहुमतात्वं तावदस्तु किन्त्वेतत्सर्वं वासवदत्तायै देव्यै कथयिष्ये तवानुचितं तादृशं व्यवहारं प्रकाशयिष्ये।

(८३) अविदेति विषादे। हा धिगिति संस्कृतम्।

राजा—(सविषादम्) एवम्। (८४) उपरता वासवदत्ता,
अनेन परिहासेन व्याक्षिप्तं मे मनस्त्वया।
ततो वाणी तथैवेयं पूर्वाभ्यासेन निस्सृता ॥५॥(८५)

पद्मावती—रमणीओ खु कहाजोओ णिसंसेण विसंवादिओ। [रमणीयः खलु कथायोगो नृशंसेन विसंवादितः।](८६)

वासवदत्ता—(आत्मगतम्) भोदु भोदु, विस्सत्थाह्मि। अहो पिअं णाम ईदिसं वअणं अप्पच्चक्खं सुणीअदि। [भवतु

---

(८४) एवम्—यथा भवान् कथयति तत् सत्यमेवेत्यर्थः।

(८५) त्वया अनेन वासवदत्ता प्रिया पद्मावती वेति प्रश्नरूपेण परिहासेन नर्मणा मे मम मनः व्याक्षिप्तं—विक्षिप्तमिव कृतं विचारमूढदशामापादितमिति यावत्। अहं वासवदत्ताविद्यमानदशायामेव वर्ते इत्युद्बुद्धसंकल्पं सम्पादितमित्यर्थः। ततः मनस्तादृशोद्बुद्धसंकल्पात् हेतोः इयं वाणी "सर्वमेतत्कथयिष्ये देव्यै वासवदत्तायै" इत्येवं पूर्वोक्ता वाक् पूर्वाभ्यासेन-पूर्वं वासवदत्तायाः विद्यमानदशायां यः अभ्यासः तव कश्चिदपचारं दृष्ट्वा "सर्वमेत" दित्यादि कथनरूपः बहुशः परिचयः तेन हेतुना तथैव इदानीं तदभावदशायामपि तादृश्येव निस्सृता मम मुखान्निर्गता। उपरतापि सा यदि मया क्षणमपि विस्मर्तुं न शक्यते तर्हीदानीं भवता तादृशेन परिहासेन सा जीवत्येवेति प्रत्यायिता कथं विस्मर्तुं शक्यत इति भावः।

(८६) रमणीयः मनोहरः कथायोगः कथाप्रसङ्गः नृशंसेन—क्रूरेण मूर्खेणेत्यर्थः। विसम्वादितः—विघ्नितः वसन्तकेनार्य्यां स्मारयित्वा विघटित इत्यर्थः।

(८७) भवतु भवतु—मह्यमेतावदेवालम्। विश्वस्तास्मि—आर्यपुत्रो मां न विस्मरतीति सञ्जातविश्वासास्मि। अहो प्रियं नाम—एषा प्रियस्य

भवतु, विश्वस्तास्मि । अहो प्रियं नामेदृशं वचनमप्रत्यक्षं श्रूयते । ] (८७)

विदूषकः—धारेदु धारेदु भवं। अणदिक्कमणीओ हि विही । ईदिसं दाणिं एदं । [ धारयतु धारयतु भवान् । अनतिक्रमणीयो हि विधिः । ईदृशमिदानीमेतत् । ] (८८)

राजा—वयस्य ? न जानाति भवानवस्थाम् । (८९) कुतः ।

दुःखं त्यक्तुं बद्धमूलोऽनुरागः
स्मृत्वा स्मृत्वा याति दुःखं नवत्वम् ।
यात्रा त्वेषा यद्विमुच्येह बाष्पं
प्राप्तानृण्या याति बुद्धिः प्रसादम् ॥६॥(९०)

---

परा काष्ठा यत् ईदृशं वचनं यथार्थपुत्रेणोक्तम् अप्रत्यक्षं परोक्षं श्रूयते नातः परतरं किमपि प्रियं सम्भवतीति भावः ।

(८८) धारयतु—आत्मानं पर्यवस्थापयतु । वासवदत्ताविरहजं शोकं त्यजत्वित्यर्थः । हि—यतः विधिः दैवम् अनतिक्रमणीयः लङ्घयितुमशक्यः इदानीं एतत् प्रियाविरहजं कष्टम् ईदृशं—अनतिक्रमणीयेन विधिनैव विहितम् । अतस्तत्त्याज्यमेवेत्यर्थः ।

(८९) अवस्थां—मादृशां विरहिणामनुरागिणां दशाम् । यतः—

(९०) बद्धमूलः दृढः अनुरागः प्रियजनविषयकः स्नेहः त्यक्तुं दुःखं दुष्करः स हि माञ्जिष्ठारागः परिहर्तुं न शक्यत इत्यर्थः, किन्तु स्मृत्वा स्मृत्वा त्यक्तुं प्रयतमानस्यानुरागिण इत्यध्याहारः दुःखं नवत्वं याति । सद्योजातमिवातितरां दुःसहं सम्पद्यत इत्यर्थः । यद्विस्मर्तुं यत्यते तत् पुनः पुनः स्मृतिपथमुपयातीत्यहोप्रणयिनामनवस्था दुरवस्थेति भावः। इह अस्यां दशायां यात्रा दुःखयापनोपायस्तु एषा यत् बाष्पं अश्रु विमुच्य रुदित्वाऽऽश्वस्तस्य विरहिणः प्रणयिजनस्य बुद्धिः प्राप्तानृण्या—कृतर्णपरिशोधा सती

विदूषकः—अस्सुपादकिलिण्णं खु तत्तहोदो मुहं। जाव-मुहोदअं आणेमि। (निष्क्रान्तः) [ अश्रुपातक्लिन्नं खलु तत्रभवतो मुखम्। यावन्मुखोदकमानयामि। ] (९१)

पद्मावती—अय्ये ! बप्फाउलपडन्तरिदं अय्यउत्तस्स मुहं। जाव णिक्कमह्म। [ आर्ये ! बाष्पकुलपटान्तरितमार्यपुत्र-स्य मुखम्। यावन्निष्क्रामामः। ] (९२)

वासवदत्ता—एव्वं होदु। अहवा चिट्ठ तुमं। उक्कण्ठिदं भत्तारं उज्झिअ अजुत्तं णिग्गमणं। अहं एव्व गमिस्सं। [ एवं भवतु। अथवा तिष्ठ त्वम्। उत्कण्ठितं भर्तारमुज्झित्वाऽयुक्तं निर्गमनम्। अहमेव गमिष्यामि। ]

चेटी—सुट्ठु अय्या भणादि। उवसप्पदु दाव भट्टिदारिआ। [ सुष्टु आर्या भणति। उपसर्पतु तावत् भर्तृदारिका। ] (९३)

पद्मावती—किंणु खु पविसामि। [किन्नु खलु प्रविशामि।] (९४)

---

प्रसादं प्रसन्नतां याति दुःखिजनः कश्चित्कालं प्रकृतिस्थः सम्पद्यत इत्यर्थः। संयोगे सहासमादत्तस्य तादृशानन्दानुभवलक्षणस्य ऋणस्य वियोगे सरोदनं विलपनमेव परिशोधनमिवेति भावः ॥ ६ ॥

(९१)—अश्रुपातक्लिन्नं—प्रियाविश्लेषदुःखेन पतितैरश्रुजलैः आर्द्रं दूषितमित्यर्थः। मुखोदकं—मुखप्रक्षालनार्थं जलम्।

(९२)—बाष्पाकुलपटान्तरितं—बाष्पैरश्रुभिराकुलं पूर्णम् अतएव पटेनेव वस्त्रेणेव अन्तरितम् आच्छन्नम् द्रष्टुमक्षमनयनमित्यर्थः। निष्क्रामामः मण्डपान्निर्गम्य गच्छामः।

(९३) उपसर्पतु—भर्तुः समीपं गच्छतु।

(९४) प्रविशामि—उपसर्पामि।

**वासवदत्ता**—हला पविस। (इत्युक्त्वा निष्क्रान्ता) [हला प्रविश। ] (९५)

( प्रविश्य )

**विदूषकः**—(नलिनीपत्रेण जलं गृहीत्वा) एसा तत्तहोदी पदुमावदी। [ एषा तत्रभवती पद्मावती। ]

**पद्मावती**—अय्य ! वसंतअ ! किं एदं। [आर्य ! वसंतक ! किमेतत्। ] (९६)

**विदूषकः**—एदं इदं। इदं एदं [एतदिदम्। इदमेतत्। ] (९७)

**पद्मावती**—भणादु भणादु अय्यो भणादु। (भणतु भणत्वार्यो भणतु। ] (९८)

**विदूषकः**—भोदि ! वादणीदेण कासकुसुमरेणुणा अक्खिणिपडिदेण सस्सुपादं खु तत्तहोदो मुहं। ता गेह्णदु होदी इदं मुहोदअं। [भवति ! वातनीतेन काशकुसुमरेणुनाक्षिनिपतितेन

---

(९५) प्रविश—उपसर्प्प।

(९६) किमेतत्—एतत्—तव हस्ते वर्त्तमानं किमिदं किमर्थं चेति सामान्यविशेषप्रश्नः।

(९७) प्रकृतं संगोपयितुं तावत्सामान्यप्रश्नमेवोत्तरयति—एतदिति। एतत्—नलिनीपत्रपुटम् इदं च जलम्। अवगतम् ? नो चेत् पुनः श्रूयताम्—इदं जलं एतच्च नलिनीपत्रपुटम्।

(९८) विशेषप्रश्नोत्तरं श्रोतुं त्वरयति भणत्विति। हास्येनालम् राजपरिजनस्य विशेषप्रश्नार्यस्यैतत्कामपि शङ्कां जनयतीति किमर्थमिदं नीयत इति सद्यो ब्रूहीत्यर्थः।

(९९) प्रत्युत्पन्नमतिर्विदूषकोऽथापि प्रकृतं गोपयन्नेवोत्तरयति भवती-

-साश्रुपातं खलु तत्र भवतो मुखम् । तद्गृह्णातु भवतीदं मुखो-दकम् । ] (९९)

**पद्मावती**—अहो सदक्खिञ्जस्स जणस्स परिजणो वि सदक्खिञ्जो एव्व होदि । (उपेत्य) जेदु अय्यउत्तो । इदं मुहोदअं । [ अहो सदाक्षिण्यस्य जनस्य परिजनोऽपि सदाक्षिण्य एव भवति । जयत्वार्यपुत्रः । इदं मुखोदकम् । ] (१००)

**राजा**—अये पद्मावती! (अपवार्य) वसंतक! किमिदम् (१०१)

**विदूषकः**—(कर्णे) एव्वं विअ । [ एवमिव । ] (१०२)

**राजा**—साधु वसन्तक ! साधु ! साधु । (आचम्य) पद्मा-वति ! आस्यताम् (१०३)

---

त्यादि । वातनीतेन—वायुना विद्धेन । तत्रभवतः—प्रियवयस्यस्य । भवती गृह्णातु भवत्यैवैतदुपनेतव्यमित्यौचित्यप्रदर्शनम् ।

(१००) प्रकृतं जानानापि भर्तुर्भक्तस्य विदूषकस्य प्रकृतया वैदग्ध्या-तीवपरितुष्टात्मगतमाह—अहो इति । अत्र वाक्यादौ ( आत्मगत ) मिति (घ) पुस्तकपाठ एव श्रेयान् भाति । अत्र परिजने दक्षिणशब्दः उदारार्थकः । यथा भर्ता दाक्षिण्यगुणयुक्तो मिलितस्तथैव तत्परिजनोपीत्यहो मे सौभाग्य-सम्पत्तिरिति भावः ।

(१०१) अपवार्य—पद्मावती यथा न शृणोति तथा परिवृत्यानुच्चैः स्वरेण संगोप्य । किमिदम्—इदं मुखोदकं पद्मावत्या कथमुपनीतम् ? किमियं विदितवृत्ता ?

(१०२) एवमिव—अन्यथोद्गतोऽपि भवतोऽश्रुपातः प्रच्छादनार्थं मया पद्मावतीं प्रत्यन्यथयितः "वातनीतेन काशकुसुमरेणुनाक्षिनिपतितेन साश्रु-पातं खलु तत्रभवतो मुखमिति" भवताप्येवमेव वाच्यमिति ।

(१०३) साधु—( आत्मगत ) मित्यादिः । पद्मावती—( प्रकाश ) मित्यादिः । आस्यताम्—उपविश्यताम् ।

पद्मावती—जं अय्यउत्तो आणवेदि । (उपविशति) [यदार्यपुत्र आज्ञापयति।]

राजा—पद्मावति !

शरच्छशाङ्कगौरेण वाताविद्धेन भामिनि ।
काशपुष्पलवेनेदं साश्रुपातं मुखं मम ॥७॥ (१०४)

(आत्मगतम्)

इयं बाला नवोद्वाहा सत्यं श्रुत्वा व्यथां व्रजेत् ।
कामं धीरस्वभावेयं स्त्रीस्वभावस्तु कातरः ॥७॥(१०५)

विदूषकः—उइदं तत्तहोदो मअधराअस्स अवरह्णकाले भवन्तं अग्गदो करिअ सुहिज्जणदंसण । सक्कारो हि णाम सक्का-

---

(१०४) कदाचिदनया कथञ्चिदूहितवांस्तवाश्रुपातकारणया तदपलापेन च कोपनयापिभाव्यमित्याशङ्क्यापृष्टोऽपि भामिनीति सम्बोधयन्स्वयमेव कारणान्तरमाह—शरदिति । हे भामिनि ! प्रिये ! पद्मावती ! इदं मम मुखं शरच्छशाङ्कगौरेण शरच्चन्द्रबद्धदलेन वाताविद्धेन वायुनानीय अक्षिण क्षिप्तेन काशपुष्पलवेन काशकुसुमकणेन साश्रुपातं सम्वृत्तमिति शेषः ।

(१०५) यद्यपि स्त्रीष्वनृतं न दोषाय तथापि तथाचरणस्यौचित्यं युक्त्यन्तरेण समर्थयते इयमिति । बाला नवोढा अपरिपक्वज्ञानपरिचयेत्यर्थः इयं पद्मावती सत्यं तादृशं यथार्थम् अश्रुपातकरणं श्रुत्वा व्यथां पीडां व्रजेत् । कामं मन्ये इयं धीरस्वभावा विकारहेतावपि अविकृतप्रकृतिः तु किन्तु स्त्रीस्वभावः कातरः अधीरः । धीरापि स्त्रीप्रकृतिसुलभकातरतया पीडामनुभवेदेवेति तथा गोपनमेवोचितमिति भावः ॥ ८ ॥

(१०६) अथ विदूषकः प्रसक्ताधिकविनोदव्यासक्तिवारणायावश्यानुष्ठेयं कार्य्यान्तरं स्मारयति उचितमित्यादि । तत्रभवतो मगधराजस्य अपराह्णकाले भवन्तमग्रतः कृत्वा सुहृज्जनदर्शनम् उचितमित्यन्वयः । अयं भावः—

रेणपडिच्छिदो पीदिं उप्पादेदि । ता उट्ठेदु दाव भवं । [ उचितं तत्रभवतो मगधराजस्यापराह्णकाले भवन्तमग्रतः कृत्वा सुहृज्जन-दर्शनम् । सत्कारो हि नाम सत्कारेण प्रतीष्टः प्रीतिमुत्पादयति। तदुत्तिष्ठतु तावत् भवान् । ] (१०६)

राजा— वाढम् । प्रथमः कल्पः ! (उत्थाय) (१०७)

गुणानां वा विशालानां सत्काराणां च नित्यशः ।
कर्तारः सुलभा लोके विज्ञातारस्तु दुर्लभाः ॥६॥(१०८)

( निष्क्रान्ताः सर्वे )

इति चतुर्थोऽङ्कः ।

---

अत्र विवाहोत्सवे निमन्त्रितैः समागतैश्च प्राधान्येन जामातरं दिदृक्षुभिः भवता सहैव मगधराजः प्रथमं दर्शनादिना सत्कृतः । अथेदानीं तेन तेषां तथैव प्रतिसत्कारोऽपि विधेयः स च भवता सहैव विधातुमुचित इति । प्रातसत्कारविधानस्यावश्यानुष्ठेयत्वमौचित्यं च समर्थ्यते सत्कार इत्यादिना । हि—यतः सत्कारो नाम समुदाचारतया जगति प्रथिता पूजा च सत्कारेण सत्कृतेन कृतेन प्रतिसत्कारेण प्रतीष्टः सादरं स्वीकृतः सन् प्रीतिं सत्कर्तुः सन्तोषम् उत्पादयति जनयति नान्यथेत्यर्थः ततः तस्मात् भवानुत्तिष्ठतु— तदर्थं नियतस्यापराह्णसमयस्य सन्निहितत्वात्तावदिदानीमित उत्थाय तदर्थं प्रतिष्ठतामित्यर्थः ।

(१०७) वाढं वरम् । प्रथमः कल्पः मुख्यो विधिः अवश्यमनुष्ठेय इत्यर्थः ।

(१०८) गुणानामिति । विशालानां महतां गुणानां त्यागोपकारादि सत्कार्य्याणां सत्काराणां च नित्यशः नित्यं कर्त्तारः लोके सुलभाः प्रत्युपकारादिलिप्सया स्वत एव तत्र तत्र प्रवृत्तेः सिद्धत्वात् । तु किन्तु विज्ञातारः

## अथ पञ्चमोऽङ्कः ।

( ततः प्रविशति पद्मिनिका )

पद्मिनिका—महुअरिए ! महुअरिए ! आअच्छ दाव सिग्घं । [ मधुकरिके ! मधुकरिके ! आगच्छ तावच्छीघ्रम् । ]

( प्रविश्य )

मधुकरिका—हला ! इअह्मि । किं करिअदु । [हला! इयमस्मि । किं क्रियताम् । ]

पद्मिनिका—हला ! किं ण जाणासि तुवं भट्टिदारिआ पदुमावदी सीसवेदणाए दुक्खाविदे त्ति । [ हला ! किं न जानासि त्वं भर्तृदारिका पद्मावती शीर्षवेदनया दुःखितेति ।] (१)

मधुकरिका—हद्धि । [ हा धिक् । ]

पद्मिनिका—हला ! गच्छ सिग्घ, अय्यं आवंतिअं सद्दावेहि । केवलं भट्टिदारिआए सीसवेदणं एव्व णिवेदेहि । तदो सअं एव्व आगमिस्सदि । [हला ! गच्छ शीघ्रम्, आर्यमाव-

---

उपकारे सत्कारे च कृते प्रत्युपकारः प्रतिसत्कारश्चावश्यमनुष्ठेय इति स्वकर्तव्यवेदिनः पुरुषा दुर्लभाः । बहवो हि जनाः परकृतमुपकारं सत्कार्यं वाहम्मन्यतया स्वसेवां मन्यन्ते किन्तु महदेतदनुचितमिति तत्प्रतिशोधोऽवश्यमनुष्ठेय इति भावः ॥९॥

इति चतुर्थोऽङ्कः ।

अथ पञ्चमोऽङ्कः ।

( १ ) शीर्षवेदनया दुःखिता—शिरःपीडया प्रयोजककर्त्र्या दुःखं प्रापिता । चुरादेः दुःखधातोर्ण्यन्तात्कर्मणि क्तः । णेर्लोपः ।

( २ ) शब्दय—सूचय । किं सूचयामीत्याकाङ्क्षायामाह—केवल-

न्तिकां शब्दय । केवलं भर्तृदारिकायाः शीर्षवेदनामेव निवेदय। ततः स्वयमेवागमिष्यति ।] (२)

मधुकरिका—हला ! किं सा करिस्सदि ? [हला ! किं सा करिष्यति ?] (३)

पद्मिनिका—सा खु दाणिं महुराहिं कहाहिं भट्टिदारिआए सीसवेदणं विणोदेदि। [सा खल्विदानीं मधुराभिः कथाभिः भर्तृदारिकायाः शीर्षवेदनां विनोदयति ।] (४)

मधुकरिका—जुज्जइ। कहिं सअणीअं रइदं भट्टिदारिआए। [युज्यते । कुत्र शयनीयं रचितं भर्तृदारिकायाः ।]

पद्मिनिका—समुद्दगिहके किल सेज्जात्थिण्णा । गच्छ दाणिं तुवं । अहं वि भट्टिणो णिवेदणत्थं अय्यवसंतअं अण्णेसामि । [ समुद्रगृहके किल शय्यास्तीर्णा । गच्छेदानीं त्वम् । अहमपि भर्त्रे निवेदनार्थमार्यवसन्तकमन्वेषे । ]

मधुकरिका—एव्वं होदु। [एवं भवतु] [निष्क्रान्ता]

पद्मिनिका—कहिं दाणिं अय्यवसन्तअं पेक्खामि । [ कुत्रेदानीमार्यवसन्तकं प्रेक्षे । ]

---

मिति । केवलं शीर्षवेदनामेव, नत्वागन्तुमाज्ञापय, अनौचित्यात् इति भावः।

( ३ ) सा किं करिष्यति—सा न चिकित्सिकेति तथा प्रश्नः ।

( ४ ) विनोदयति—लघूकरिष्यति । वर्तमानसामीप्ये भविष्यति लट्।

( ५ ) समुद्रगृहे—तदाख्ये भवने प्रासादे । तत्रवै यथा सा गच्छति तथा विधेहीति भावः । किलेति वार्तायाम् । एवमेव मया श्रुतमित्यर्थः। तत्र शय्यास्तीर्णा एव पद्मावती तत्र न गतेत्यन्यदेतदिति बोध्यम् ।

( ततः प्रविशति विदूषकः )

**विदूषकः**—अज्ज खु देवीविओअविहुरहिअअस्स तत्तहोदो वच्छराअस्स पदुमावतीपाणिग्गहणसमीरिअस्स अच्चन्तसुहावहे मङ्गलोसवे मदणग्गिदाहो अहिअदरं वड्डइ। ( पद्मिनिकां विलोक्य) अयि पदुमिणिआ पदुमिणिए, किं इह वत्तदि? [अद्य खलु देवीवियोगविधुरस्य तत्रभवतो वत्सराजस्य पद्मावतीपाणिग्रहणसमीरितस्यात्यन्तसुखावहे मंगलोत्सवे मदनाग्निदाहोऽधिकतरं वर्धते। अयि पद्मिनिका। पद्मिनिके! किमिह वर्तते?](६)

**पद्मिनिका**—अय्य! वसन्तअ! किं ण जाणासि तुवं भट्टिदारिआ पदुमावती सीसवेदणाए दुःखाविदात्ति? [आर्य! वसन्तक! किं न जानासि त्वं, भर्तृदारिका पद्मावती शीर्षवेदनया दुःखितेति।]

**विदूषकः**—भोदि! सच्चं, ण जाणामि। [भवति! सत्यं, न जानामि।]

**पद्मिनिका**—तेण हिं भट्टिणो णिवेदेहि णं। जाव अहं वि सीसाणुलेवणं तुवारेमि। [तेन हि भर्त्रे निवेदयैनाम्। यावदहमपि शीर्षानुलेपनं त्वरयामि।] (७)

---

(६) देवीवियोगविधुरहृदयस्य—देव्या वासवदत्ताया वियोगेन विधुरं विकलं-हृदयं यस्य तथोक्तस्य पूर्वं विषयविमुखस्येत्यर्थः। पद्मावतीपाणिग्रहणसमीरितस्य—पद्मावत्या सह विवाहेन समीरितस्य। विषयभोगार्थं प्रवर्तितस्य। इदानीं पर्य्युत्सुकस्येत्यर्थः। वर्द्धते—सन्धुक्षित इव वर्तते। अनेन तन्निर्वापोपायोऽद्य भावीति सूच्यते। किमिह वर्तते—इह अन्तःपुरे किं वर्तते पद्मावत्याः कः सम्वादोऽस्ति। किमिदानीं सा चिकीर्षतीति प्रष्टुराशयः।

(७) एनां तथा पीडितां पद्मावतीं शीर्षानुलेपनं-शिरोवेदनापहं लेप त्वरयामि सत्वरमानयामि प्रेपयामि वा।

विदूषकः—कहिं सअणीअं रइदं पदुमावदीए। [ कुत्र शयनीयं रचितं पद्मावत्याः। ]

पद्मिनिका—समुद्दगिहके किल सेज्जात्थिण्णा । [समुद्रगृहके किल शय्यास्तीर्णा । ]

विदूषकः—गच्छदु भोदी। जाव अहं वि तत्तहोदो णिवेदइस्सं। [गच्छतु भवती। यादवहमपि तत्रभवते निवेदयिष्यामि।]

( निष्क्रान्तौ )

इति प्रवेशकः।

---

( ततः प्रविशति राजा )

राजा—

श्लाघ्यामवन्तिनृपतेः सदृशीं तनूजां
कालक्रमेण पुनरागतदारभारः।
लावाणके हुतवहेन हृताङ्गयष्टिं
तां पद्मिनीं हिमहतामिव चिन्तयामि ॥१॥ (८)

---

(८) कालक्रमेण—कालानुक्रमेण प्रियाविरहात्परं बहुसमययापनानन्तरमित्यर्थः। अथवा कालक्रमेण कालशक्त्या—समयमहिम्ना न तु ममेच्छया। क्रमश्चानुक्रमे शक्तौ इति मेदिनी। पुनः आगतः प्राप्तः दारान्तरपरिग्रहरूपः भारो यस्य सः। मम पद्मावतीपरिग्रहः भार इव दुर्वहः न तु तादृशसन्तोपजनक इत्यर्थः। अतएवाहं श्लाघ्यां सर्वथा श्लाघनीयां सदृशीं स्वानुरूपां लावाणके तदाख्ये ग्रामे हुतवहेन अग्निना हृताङ्गयष्टि परिदग्धदेहलतां ताम् अवन्तिनृपतेः महासेनस्य तनूजां पुत्रीं वासवदत्तां हिमहतां तुषारदलितां पद्मिनीं कमलिनीलतामिव चिन्तयामि स्मरामि कृतदारान्तरपरिग्रहोऽपि तां हृदयाधिदेवतां विस्मर्तुं न शक्नोमीत्यर्थः ॥१॥

( प्रविश्य )

**विदूषकः**—तुवरदु तुवरदु दाव भवं । [ त्वरतां त्वरतां तावत् भवान् । ]

**राजा**—किमर्थम् ?

**विदूषकः**—तत्तहोदी पदुमावदी सीसवेदणाए दुक्खाविदा । [ तत्रभवती पद्मावती शीर्षवेदनया दुःखिता । ]

**राजा**—कैवमाह ?

**विदूषकः**—पदुमिणिआए कहिदं । [ पद्मिनिकया कथितम् । ]

**राजा**—भोः ! कष्टम्—

रूपश्रिया समुदितां गुणतश्च युक्तां
लब्ध्वा प्रियां मम तु मन्द इवाद्य शोकः ।
पूर्वाभिघातसरुजोऽप्यनुभूतदुःखः
पद्मावतीमपि तथैव समर्थयामि ॥२॥ (९)

---

(९) पूर्वाभिघातसरुजोऽपि—पूर्वेण प्राथमिकेन अभिघातेन वासवदत्तादाहरूपेण वज्रपाताघातेन सरुजोऽपि तादृशीं घातपीडामनुभवतोऽपि अद्य रूपश्रिया स्वरूपलक्ष्म्या समुदितां सम्पन्नां गुणतश्च सौशील्यादिगुणैरपि युक्तां प्रियां प्रियागतैः एतैः कतिपयैर्गुणैः प्रियाकल्पां पद्मावतीं लब्ध्वा किञ्चिदाश्वस्तस्य मम शोकः प्रियतमाविरहजनितः सन्तापः मन्द इव शिथिल इव नतूपरतः सञ्जातः । तु किन्तु अनुभूतदुःखः भुक्तक्लेशः सततदुःखभोगायैव ब्रह्मणा सृष्टोऽहं शिरोवेदनया दुःखितां पद्मावतीमपि तथैव समदुःखामेव आत्मानमिव दुःखभोगायैव विधिना निर्मितां समर्थयामि—मन्ये । हतभाग्यानां संसर्गिणोऽपि दुःखमनुभवन्तीति भावः ॥२॥

अथ कस्मिन् प्रदेशे वर्तते पद्मावती ? (१०)

विदूषकः—समुद्दगिहके किल सेज्जा त्थिण्णा । [ समुद्रगृहके किल शय्यास्तीर्णा । ]

राजा—तेन हि तस्य मार्गमादेशय ।

विदूषकः—एदु एदु भवं [ एत्वेतु भवान् । ]

( उभौ परिक्रामतः )

विदूषकः—इदं समुद्दगिहकं । पविसदु भवं । [ इदं समुद्रगृहकम् । प्रविशतु भवान् । ]

राजा—पूर्वं प्रविश ।

विदूषकः—भो ! तह । (प्रविश्य) अविहा चिट्ठदु चिट्ठदु दाव भवं । [ भोः ! तथा । अविहा तिष्ठतु तिष्ठतु तावद्भवान् । ] (११)

राजा—किमर्थम् ?

विदूषकः—एसो खु दीवप्पभावसूइदरूवो वसुधातले परिवत्तमाणो अअं काओदरो । [ एष खलु दीपप्रभावसूचितरूपो वसुधातले परिवर्तमानोऽयं काकोदरः । ] (१२)

राजा—[ प्रविश्यावलोक्य सस्मितम् । ] अहो सर्पव्यक्तिर्वैधेयस्य । (१३)

---

(१०) कस्मिन् प्रदेशे प्रासादे ।

(११) विशादशिथिलं राजानमुत्तेजयितुं प्रयतते अविहेति । तिष्ठतु मा प्रविशत्वित्यर्थः ।

(१२) दीपप्रभावसूचितरूपः । दीपस्य प्रभया रोगिणां दृष्टिप्रतिघातवारणाय क्षीणया अवसूचितं न तु यथार्थतः प्रकाशितं रूपं यस्य सः परिवर्तमानः विचेष्टमानः । काकोदरः सर्पः ।

(१३) वैधेयस्य मूर्खस्य ।

ऋज्वायतां हि मुखतोरणलोलमालां
भ्रष्टां क्षितौ त्वमवगच्छसि मूर्ख ! सर्पम् ।
मन्दानिलेन निशि या परिवर्तमाना ।
किञ्चित्करोति भुजगस्य विचेष्टितानि ॥३॥(१४)

विदूषकः—( निरूप्य ) सुट्ठु भवं भणादि । ण हु अअं काओदरो । ( प्रविश्यावलोक्य ) तत्तहोदी पदुमावदी इह आअच्छिअ णिग्गदा भवे । [ निरूप्य ] [ सुष्ठु भवान् भणति । न खल्वयं काकोदरः । ( प्रविश्यावलोक्य ) तत्रभवती पद्मावती इहागत्य निर्गता भवेत् । ]

राजा— वयस्य ! अनागतया भवितव्यम् ।

विदूषकः—कहं भवं जाणादि ? [ कथं भवान् जानाति ? ]

राजा—किमत्र ज्ञेयम् । पश्य,

शय्या नावनता तथाऽऽस्तृतसमा न व्याकुलप्रच्छदा
न क्लिष्टं हि शिरोपधानममलं शीर्षाभिघातौषधैः ।

---

(१४) मूर्ख ! त्वं ऋज्वीं सरलाम् आयतां दीर्घां च तथात्वात् सर्पभ्रमकारिकां क्षितौ भूतले भ्रष्टां ग्रन्थेरदृढतया स्रस्तां पतितां मुखतोरणलोलमालां मुखतोरणे प्रधानद्वारस्य बहिः उपरिरचिते अर्द्धचन्द्राकारे ( मेहराब ) इति प्रसिद्धे भागे शोभार्थं बद्धां लोलां लम्बमानां मालां पुष्पस्रजं सर्पम् अवगच्छसि मन्यसे । या निशि रात्रौ मन्दानिलेन मन्थरगतिना वायुना हेतुना किञ्चित् परिवर्तमाना मनाक् परिसर्पन्ती भुजगस्य सर्पस्य विचेष्टितानि वक्रगत्यादिचेष्टाः करोति सर्पमनुकरोतीत्यर्थः ॥ ३ ॥

(१५) अनागमनानुमाने हेतूंस्तावदुपन्यस्यति शय्येति । हि यतः शय्या न अवनता उपवेशने शयने वा देहभारेण नावस्तात् अवनतिं

**रोगे दृष्टिविलोभनं जनयितुं शोभा न काचित् कृता**
**प्राणी प्राप्य रुजा पुनर्न शयनं शीघ्रं स्वयं मुञ्चति ४(१५)**

---

नीता तथा आस्तृतसमा यथा आस्तृता तथैव समा नवास्तृतैव नतूपयोगे आनीता । न व्याकुलप्रच्छदा—व्याकुलः अङ्गसम्मर्देन यत्र तत्र सङ्कुचितः प्रच्छदः (चादर) प्रावरणपटः यस्याः सा तथाभूता न, अमलं स्वच्छं शिरोपधानं शिरेण शिरसा उपयुज्यमानम् उपधानम् उपबर्हणं ( तकिया ) इति प्रसिद्धं शीर्षाभिघातौषधैः शिरःपीडानिवर्तकैः औषधलेपैः न क्लिष्टं न मलिनीकृतम् । "पिण्डं दद्यात् गयाशिरे" इति प्रयोगदर्शनाददन्तोऽपि शिरः शब्दो दृश्यते । एतानि शय्यानुपयोगलक्षणानि तस्या अनागमनं साधयन्तीत्यर्थः । किञ्च रोगिशय्यागृहसज्जापि तथा सूचयतीत्याह—रोगे उपायान्तरैरपि शमनीये शिरोवेदनादौ जाते सति दृष्टिविलोभनं जनयितुं रोगिणः दृष्टेः समाकर्षम् उत्पादयितुं यथा रोगिणः दृष्टिसम्मुखे सज्जिते कुत्रापि रम्ये वस्तुनि अवश्यं पतति सच तद्दर्शनानन्देन प्रकृतं दुःखं विस्मरति तथा कर्तुमित्यर्थः । तादृशी काचित् शोभा मनोहरचित्रादिविन्यासरूपा रोगिशय्या गृहसज्जा न कृता । सावश्यं कर्तव्यापि न कृतेत्येतत् तदर्थं शय्यागृहमेव न सिध्यति कुतः पुनस्तदागमनमिति भावः। एवं सति तस्या निर्गमनाभावोऽपि स्वतः सिद्ध एव तथापि द्विर्बद्धम् सुबद्धं भवतीति न्यायेन तदनागमनमेव द्रढयितुं तन्निर्गमनाभावमपि साधयति प्राणीति । प्राणी कोऽपि जीवः किम्पुनः मनुष्यः रुजा पीडया आक्रान्तः कुतोऽपि शयितुं लालायितः सन् शयनं प्राप्य पुनः तत् शीघ्रं तदपि स्वयं न मुञ्चति । ततश्च स्वयमसिद्धः कथं परान्साधयतीति न्यायेन रोगिजनप्रकृतिप्रतिकूलतया स्वयमसिद्धः शय्यात्यागलक्षणो हेतुः स्वसाध्यं निर्गमनं साधयितुं न शक्नोतीति प्रकृते पद्मावत्याः आगमननिर्गमनयोरसिद्ध्या अद्य यावत्तदनागमनमेव सिध्यतीति भावः ॥ ४ ॥

विदूषकः—तेण हि इमस्सिं सय्याए मुहुत्तअं उवविसिअ तत्तहोदिं पडिवालेदु भवं। [ तेन ह्यस्यां शय्यायां मुहूर्तकमुपविश्य तत्रभवतीं प्रतिपालयतु भवान्। ]

राजा—बाढम्। ( उपविश्य ) वयस्य! निद्रा मां बाधते। कथ्यतां काचित् कथा। (१६)

विदूषकः—अहं कहइस्सं। हुंकिदं करेदु अत्तभवं। [अहं कथयिष्यामि। हुंकृतिं करोत्वत्रभवान्। ] (१७)

राजा—बाढम्।

विदूषकः—अत्थि णअरी उज्जइणी णाम। तहिं अहिअरमणीआणि उदअह्लाणाणि वत्तन्ति किल। [अस्ति नगर्युज्जयिनी नाम। तत्राधिकरमणीयान्युदकस्नानानि वर्तन्ते किल। ] (१८)

राजा—कथमुज्जयिनी नाम। (१९)

---

(१६) व्यग्रचित्तस्यापि मे यथा झटिति निद्रा आगच्छतु तथा कामपि कथां कथयेत्यर्थः।

(१७) हुङ्कृतिं—शृणोमि ततः किमभूत् कथयेति सूचकं 'हुं' कारम्। इदं परिप्रश्नार्थकमव्ययम्, शृणोमीति संक्षिप्तेऽपि प्रयुज्यते।

(१८) उदकस्नानानि उदकेषु अच्छोदसीप्रादिजलेषु स्नानानि एष विचित्रः कथोपक्रमः हास्यार्थः। अत्र 'वत्तन्ति' क्रियानुगुणः 'उदअत्थाणाणि' इत्येव पाठः प्रायो भवेत्। उदकस्थानानि अच्छोदादयो जलाशया इति तदर्थः। तावतापि न हास्यहानिः।

(१९) कथमुज्जयिनी नाम कथं प्रसिद्धामुज्जयिनीमेव प्रस्तुत्य कथारब्धा। उज्जयिनी मे अतिप्रिया तद्विषयिणी कथा मामतितरां प्रीणयिष्यतीत्याशयः।

विदूषकः—जइ अणाभिप्पेदा एसा कहा, अण्णं कहइस्सं। [ यद्यनभिप्रेतैषा कथा, अन्यां कथयिष्यामि । ] (२०)

राजा—वयस्य ! खलु नाभिप्रेतैषा कथा । किन्तु,

स्मराम्यवन्त्याधिपतेः सुतायाः
प्रस्थानकाले स्वजनं स्मरन्त्याः ।
बाष्पं प्रवृद्धं नयनान्तलग्नं
स्नेहान्ममैवोरसि पातयन्त्याः ॥५॥ (२१)

अपि च,

बहुशोऽप्युपदेशेषु यया मामीक्षमाणया ।
हस्तेन स्रस्तकोणेन कृतमाकाशवादितम् ॥६॥ (२२)

---

(२०) नामशब्दार्थकुत्सामवगम्याह यदीति । अनभिप्रेता अनीप्सिता ।

(२१) प्रस्थानकाले—गुरुजनानुज्ञां विनैव स्नेहातिरेकेण सगोपनं मया सह उज्जयिन्या यात्रासमये स्वजनं मातापित्राद्यात्मीयवर्गं स्मरन्त्याः स्मरन्तीमित्यर्थः प्रवृत्तम् उद्गतं नयनान्तलग्नं अमङ्गलभिया नेत्रकोणयोरेव लग्नमवरुद्धम् अपि बाष्पम् अश्रुस्नेहात् स्वजनापेक्षयापि मयि प्रेमाधिक्यात् ममैव उरसि वक्षसि पातयन्त्याः काममहं स्वजनं जह्यां न भवन्तमिति मामाश्लिष्य रुदत्याः रुदतो अवन्त्याधिपतेः उज्जयिनीनाथस्य प्रद्योतस्य सुतायाः अधीगर्थेति कर्मणि षष्ठी । सुतां वासवदत्तां प्रियतमामित्यर्थः स्मरामि । उज्जयिनीनामश्रवणेन सा पुनः मत्स्मृतिपथमुपयातेत्यर्थः ।

(२२) बहुशोऽप्युपदेशेषु—आवृत्या दीयमानास्वपि वीणावादनशिक्षासु सत्सु मामीक्षमाणया मदीयमुखदर्शनैकव्यासक्तचित्तया पुनः पुनः कृतमप्युपदेशं विस्मरन्त्येत्यर्थः । यया वासवदत्तया स्रस्तकोणेन—स्रस्तः भ्रष्टः कोणः वीणावादनसाधनं ( मेजराब ) इति प्रसिद्धम् त्रिकोणं तन्त्रीनिर्मितं यन्त्रं यस्मात् तथोक्तेन हस्तेन मत्प्रेमविमुग्धतया तत्पतनमपि विस्मरन्त्येत्यर्थः ।

विदूषकः—भोदु, अण्णं कहइस्सं । अत्थि णअरं ब्रह्मदत्तं णाम । तहिं किल राआ कंपिल्लो णाम । [ भवतु, अन्यां कथयिष्यामि । अस्ति नगरं ब्रह्मदत्तं नाम । तत्र किल राजा काम्पिल्यो नाम ]

राजा—किमिति किमिति ?

विदूषकः—( पुनस्तदेव पठति )

राजा—मूर्ख ! राजा ब्रह्मदत्तः, नगरं काम्पिल्यमित्यभिधीयताम् ।

विदूषकः—किं राआ ब्रह्मदत्तो, णअरं कंपिल्लं । [ किं राजा ब्रह्मदत्तः, नगरं काम्पिल्यम् । ]

राजा—एवमेतत् ।

विदूषकः—तेण हि मुहुत्तअं पडिवालेदु भवं, जाव ओट्ठगअं करिस्सं । राआ ब्रह्मदत्तो, णअरं कंपिल्लं । ( इति बहुशस्तदेव पठित्वा ) इदाणिं सुणादु भवं । अयि सुत्तो अत्तभवं । अदिसीदला इअं वेला । अत्तणो पावरअं गेह्णिअ आअमिस्सं । (निष्क्रान्तः) [तेन हि मुहूर्तकं प्रतिपालयतु भवान्, यावदोष्ठगतं करिष्यामि । राजा ब्रह्मदत्तः, नगरं काम्पिल्यम् (इति बहुशस्तदेव पठित्वा ) इदानीं श्रृणोतु भवान् । अयि सुप्तोऽत्रभवान् । अतिशीतलेयं वेला । आत्मनः प्रावरकं गृहीत्वागमिष्यामि । ] ( निष्क्रान्तः ) (२३)

---

आकाशवादितं ताललयादिशून्यं वृथैव झणझणत्कारमात्रं कृतम् । तां मत्प्रेमविमुग्धां प्रियतमां स्मरामि इति पूर्वेणान्वयः ॥६॥

(२३) ओष्ठगतं—मुखस्थं अभ्यस्तमित्यर्थः । प्रावरकम्—( चादर दोहर, दोलाई, रजाई, ) इत्यादि नाम्ना प्रसिद्धम् शीतादिनिवारकं नीहारादिवस्त्रम् ।

( ततः प्रविशति वासवदत्ता आवन्तिकावेषेण, चेटी च )

**चेटी**—एदु एदु अय्या। दिढं खु भट्टिदारिआ सीससवेदणाए दुक्खाविदा। एत्वेत्वार्या। दृढं खलु भर्तृदारिका शीर्षवेदनया दुःखिता।]

**वासवदत्ता**—हद्धि, कहिं सअणीअं रइदं पदुमावदीए। [हा धिक् कुत्र शयनीयं रचितं पद्मावत्याः]

**चेटी**—समुद्दगिहके किल सेज्जात्थिण्णा। [समुद्रगृहके किल शय्यास्तीर्णा।]

**वासवदत्ता**—तेण हि अग्गदो याहि। [तेन ह्यग्रतो याहि।]

( उभे परिक्रामतः )

**चेटी**—इदं समुद्दगिहकं। पविसदु अय्या। जाव अहं वि सीसाणुलेवणं तुवारेमि (निष्क्रान्ता) [इदं समुद्रगृहकम्। प्रविशत्वार्या। यावदहमपि शीर्षानुलेपनं त्वरयामि।]

---

(२४) ईश्वराः सुखदुःखप्रदाने अधिकृताः देवाः मे मम विषये अहो अकरुणाः अतीव निर्दयाः। विरहपर्य्युत्सुकस्य मम वियोगेनोत्कण्ठितस्य मामपसार्य्य दैवेनाशरणीकृतस्येत्यर्थः। विश्रामस्थानभूता—विश्रामदायिनी। परिजनस्य—परिचारकवर्गस्य अहो प्रमादः—कस्यचिदेकस्यापि रोगिनिकटेऽनवस्थानरूपा असतर्कता। दीपमात्रसहायां—दीपमात्रं सहायो यस्यास्ताम्—एकाकिनीमित्यर्थः। अन्यासनपरिग्रहेण—पृथगासनोपवेशनेन। प्रह्लादितम्—अनयासहावस्थानेन पूर्वम् आह्लादितमेवाभूत् परमधुना तथा कृते सति तु किमिति प्रह्लादितमिव प्रियतमेन सहावस्थानेनैव प्रकृष्टं ह्लादमनुभवदिव मे हृदयं सम्वृत्तमित्यर्थः। कीदृशं मे भाग्यं मन्दभाग्याया इति तदुपेक्ष्य प्रकृतमनुसरति दिष्ट्येति। अविच्छिन्नसुखनिश्वासा—अविच्छिन्नः सततप्रवाहः नतु रोगिणः इव शिथिलसञ्चारः सोऽपि सुखः शीतलत्वात्सुखकरः न तु उष्णः निश्वासो यस्यास्तथोक्ता। न केवलं सहावस्थानं, सहालिङ्ग्य

**वासवदत्ता**—अहो अकरुणा खु इस्सरा मे। विरहपय्युस्सुअस्स अय्यउत्तस्स विस्समस्थाणभूदा इअं पि णाम पदुमावदी अस्सत्था जादा। जाव पविसामि। (प्रविश्यावलोक्य) अहो परिजणस्स पमादो! अस्सत्थं पदुमावदिं केवलं दीवसहाअं करिअ परित्तजदि। इअं पदुमावदी ओसुत्ता। जाव उवविसामि। अहवा अण्णासणपरिग्गहेण अप्पो विअ सिणेहो पडिभादि। ता इमस्सिं सय्याए उपविसामि (उपविश्य) किंणु खु एदाए सह उवविसन्तीए अज्ज पहलादिदं विअ मे हिअअं? दिट्ठिआ अविच्छिण्ण सुहणिस्सासा। णिव्वुत्तरोआए होदव्वं। अहवा एअदेससंविभाअदाए सअणीअस्स सुपदि मं आलिंगेदि त्ति। जाव सइस्सं। (शयनं नाटयति) [अहो अकरुणाः खल्वीश्वरा मे। विरहपर्युत्सुकस्यार्यपुत्रस्य विश्रामस्थानभूतेयमपि नाम पद्मावत्यस्वस्था जाता। यावत् प्रविशामि। (प्रविश्यावलोक्य) अहो परिजनस्य प्रमादः। अस्वस्थां पद्मावतीं केवलं दीपसहायां कृत्वा परित्यजति। इयं पद्मावत्यवसुप्ता। यावदुपविशामि। अथवान्यासनपरिग्रहेणाल्प इव स्नेहः प्रतिभाति। तदस्यां शय्यायामुपविशामि। (उपविश्य) किंनु खल्वेतया सहोपविशन्त्या अद्य प्रह्लादितमिव मे हृदयम्? दिष्ट्याविच्छिन्नसुखनिःश्वासा। निवृत्तरोगया भवितव्यम्। अथवैकदेशसंविभागतया शयनीयस्य सूचयति मामालिङ्गेति। यावच्छयिष्ये।] (शयनं नाटयति) (२४)

---

शयितव्यमपीत्यनया सूचितप्रायमित्याह—अथवेति। शयनीयस्य शय्याया एकदेशसंविभागतया—एकदेशस्य शय्यार्द्धस्य या संविभागता पृथक्कृतिः तया यद्वा एकदेशे सम्यक् विभागो यस्य तत्तया। अथवा 'एकदेशसंविभागितया' इत्येव सुपाठः। एकदेशे संविभागः अस्ति यस्य तत् एकदेशसंविभागि तत्तयेत्यर्थः शय्याया अर्द्धभागे एव सुप्ता अपरश्चार्द्धभागः मदर्थं शून्य

**राजा**—( स्वप्नायते ) हा वासवदत्ते ! (२५)

**वासवदत्ता**—(सहसोत्थाय) हं अय्यउत्तो, ण खु पदुमावदी। किंणु खु दिट्ठह्मि? महन्तो खु अय्यजोअन्धराअणस्स पडिण्णाहारो मम दंसणेण णिप्फला संवुत्तो। [ हम् आर्यपुत्रः, न खलु पद्मावती। किन्तु खलु दृष्टास्मि! महान् खल्वार्ययौगन्धरायणस्य प्रतिज्ञाभारो मम दर्शनेन निष्फलः संवृत्तः।] (२६)

**राजा**—हा अवन्तिराजपुत्रि !

---

एव स्थापित इत्येतावतेत्यर्थः । सूचयति मामालिङ्ग्येति । शयिताया आलिङ्गनं शयित्वैव सम्भाव्यते इति शयित्वा मामाश्लिष्येति अभिप्रैतीत्यर्थः। नाटयति—अभिनयति।

(२५) स्वप्नायते—स्वप्नः प्रसुप्तस्य विज्ञानं दर्शनं वा। "स्वप्नः स्वापे प्रसुप्तस्य विज्ञाने दर्शने पुमान्" इति व्याख्यासुधायां भानुदीक्षितः। सच ओजश्शब्दवत् वृत्तिविषये तद्वति वर्तते। ततश्च "कर्तुः क्यङिति" क्यङ्। स्वप्नवानिवाचरति स्वप्नायते—स्वप्ने विज्ञातं दृष्टं वा प्रलपतीत्यर्थः। अत्र च स्वप्ने दृष्टां वासवदत्तां सम्बोधयति हा वासवदत्ते इति।

(२६) किन्तु खलु दृष्टास्मि ? प्रबुद्धेनार्य्यपुत्रेण साक्षात्कृतास्मि? दृष्टा चेत्तर्हि महदनिष्टं जातमित्याह महानिति। प्रतिज्ञाभारः—'वासवदत्तां प्रच्छाद्य मगधराजकुमार्य्या पद्मावत्या सह स्वामिनो विवाहं सम्पाद्य मित्रीभूतस्य मगधेश्वरस्य साहाय्येन शत्रुहृतं स्वामिराज्यं प्रत्याहरिष्यामि' इत्येवं रूपार्य्ययौगन्धरायणस्य महतीप्रतिज्ञाधुरासंक्षेपः। स खलु महान् प्रतिज्ञाभारः मम दर्शनेन विफलः सम्वृत्तः। यद्यपि प्रतिज्ञायाः पद्मावतीपरिणयपर्य्यन्तांशः सिद्धः तथापि राज्यप्रत्याहार एव तस्या मुख्योंऽशः। स च मम दर्शनेन रहस्योद्भेदे जाते छलितः कुपितः मगधराजः साहाय्यं न करिष्यति चेत्तर्हि न सेत्स्यतीति। मुख्यांशस्य वैफल्ये सफलोऽप्यंशः विफल एवेति भावः।

वासवदत्ता—दिट्ठिआ सिविणाअदि खु अय्यउत्तो। ण एत्थ कोच्चि जणो। जाव मुहुत्तअं चिट्ठिअ दिट्ठिं हिअअं च तोसेमि। [ दिष्टया स्वप्नायते खल्वार्यपुत्रः। नात्र कश्चिज्जनः। यावन्मुहूर्तकं स्थित्वा दृष्टिं हृदयं च तोषयामि। ] (२७)

राजा—हा प्रिये! हा प्रियशिष्ये! देहि मे प्रतिवचनम्। (२८)

वासवदत्ता—आलवामि भट्टा! आलवामि। [आलपामि भर्तः आलपामि। ] (२९)

राजा—किं कुपितासि ?

वासवदत्ता—णहि णहि, दुक्खिदह्मि। [नहि नहि, दुःखितास्मि। (३०)

राजा—यद्यकुपिता, किमर्थं नालङ्कृतासि ? (३१)

वासवदत्ता—इदो वरं किं ? [ इतः परं किम् ? ] (३२)

---

(२७) पूर्वोक्ता च विभीषिका, प्रागुक्तं सम्बोधनवाक्यं श्रुत्वा संभ्रमेण तद्घटित 'हा' शब्दार्थाज्ञाननिबन्धनैव सम्वृत्ता। इदानीं पुनरपि तादृशमेव वाक्यान्तरं श्रुत्वा पर्य्यालोच्य च तदर्थं बुध्वा च स्वप्नप्रलपितमेवैतन्न खलु साक्षाद्दृष्टास्मीति लब्धाश्वासाह—दिष्ट्येति। नात्रेति रहस्योद्भेदशङ्कानिरासः।

(२८) प्रियशिष्ये—वीणाशिक्षायाः अन्तेवासिनि।

(२९) आलपामि—प्रतिवचनं ददामि।

(३०) न हि कुपिता अस्मि किन्तु दुःखितास्मि तव विरहेण।

(३१) दुःखितेत्यंशमश्रुत्वेव पृच्छति यदीति। नालङ्कृतासि ? भूषणैर्न भूषितासि ? कुपितानामेवालङ्कारत्यागः प्रसिद्ध इति तथा प्रश्नः।

(३२) इतः परं किम् ?—इतः—दुःखितास्मीत्येतस्मात् परं अन्यत् अधिकं वा—किं कारणं न किमपि। यतो दुःखितास्मि तत एवानलंकृतास्मि—मम दुःखमेवात्र कारणमित्यर्थः।

राजा—किं विरहिकां स्मरसि ? (३३)

वासवदत्ता—( सरोषम् ) आ अवेहि, इहावि बिरहिआ। [ आ अपेहि, इहापि विरहिका । ] (३४)

राजा—तेन हि विरहिकार्थं भवतीं प्रसादयामि । (३५) ( हस्तौ प्रसारयति ) ·

वासवदत्ता—चिरं ठिदह्मि। को वि मं पेक्खे। ता गमिस्सं। अहवा सय्यावलम्बिअं अय्यउत्तस्स हत्थं सअणीए आरोविअ गमिस्सं। (तथा कृत्वा निष्क्रान्ता) [ चिरं स्थितास्मि । कोऽपि मां पश्येत्। तद्गमिष्यामि। अथवा, शय्यावलम्बितमार्यपुत्रस्य हस्तं शयनीय आरोप्य गमिष्यामि । ] (३६)

राजा—(सहसोत्थाय) वासवदत्ते ! तिष्ठ तिष्ठ। हा धिक्

---

(३३) दुःखकारणं स्वयमुद्भाव्य निश्चयार्थं पृच्छति किमिति । किं विरहिकां स्मरसि ? किं तत्स्मरणमेव तव दुःखस्य कारणम्? इयं वत्सराजस्य भगिनी वासवदत्तायाः सपत्नीव दुःखदा । एतत्कथा कथासरित्सागरकथामुखलम्बके द्रष्टव्या ।

(३४) आः ! अपेहि—दूरमपसर इहापि—मम दुःखितदशायामपि विरहिका त्वया न विस्मर्य्यते इति वाक्यशेषः । यत्सत्यमहं दुःखितापि विरहिकास्मरणेनातिदुःखिता कृतास्मीत्यर्थः ।

(३५) तेन हि—तर्हि विरहिकार्थं विरहिकापराधं मर्षयितुं -भवतीं प्रसादयामि-अनुनयामि ।

(३६) शय्यावलम्बितं—शय्याया अधोलम्बमानम् । शयनीये आरोप्य पुनः पर्य्यङ्कस्योपरि स्थापयित्वा ।

(३७) अहं संभ्रमेण निष्क्रामन् वासवदत्तां पुनः द्रष्टुं त्वरया गृहान्निर्गच्छन् द्वारं बद्धकपाटं न वेति विमर्शं विनैव बहिर्भवन् सन्नित्यर्थः। द्वारपक्षेण बद्धेन कपाटपट्टेन ताडितः विघट्टितः प्रतिहतनिष्क्रमः सम्वृत्तोऽस्मीत्यर्थः ।

निष्क्रामन् संभ्रमेणाह द्वारपक्षेण ताडितः ।
ततो व्यक्तं न जानामि भूतार्थोऽयं मनोरथः ॥७॥(३७)

( प्रविश्य )

विदूषकः—अह पडिबुद्धो अत्तभवं। [अयि प्रबुद्धोऽत्रभवान्।

राजा—वयस्य ! प्रियमावेदये, धरते खलु वासवदत्ता।(३८)

विदूषकः—अविहा वासवदत्ता। कहिं वासवदत्ता। चिरा खु उवरदा वासवदत्ता। [अविहा वासवदत्ता। कुत्र वासवदत्ता। चिरात् खलूपरता वासवदत्ता ]

राजा—वयस्य ! मा मैवं, (४०)
शय्यायामवसुप्तं मां बोधयित्वा सखे गता ।
दग्धेति ब्रुवता पूर्वं वञ्चितोऽस्मि रुमण्वता ॥८॥(४१)

---

ततः तस्माद्धेतोः अयं मनोरथः मम वासवदत्तादर्शनविषयकोऽभिलापः भूतार्थः सत्यः यथार्थ एवेति व्यक्तं स्फुटं न जानामि तद्विषये संशयित एवास्मीत्यर्थः। अत्र द्वारपक्षेण ताडित इत्युक्त्या निष्क्रामन्त्या वासवदत्तया यथा प्रतिबुद्ध आर्य्यपुत्रो निर्गम्य मां माद्राक्षीदिति कृतं कपाटयोः सम्पिधानं सूच्यते ।

(३८) प्रतिबुद्धः—विनिद्रः ।

(३९) धरते खलु—जीवति एवेत्यर्थः ।

(४०) मा मा एवं—वासवदत्तोपरतेति मावगच्छ ।

(४१) सखे शय्यायाम् अवसुप्तं ननु सुप्तसिदशामापन्नं मा बोधयित्वा करस्पर्शेन प्रबुद्धं कृत्वा गता । दग्धा इति पूर्वं ब्रुवता, कथयता रुमण्वता वञ्चितः प्रतारितोऽस्मि ।

विदूषकः—अविहा असंभावणीअं एदं ण। आ उदअह्लाण-संकित्तणेण त्तत्तहोदिं चिन्तअन्तेण सा सिविणे दिट्ठा भवे। [अविहा असंभावनीयमेतन्न। आ उदकस्नानसंकीर्तनेन तत्र-भवतीं चिन्तयता सा स्वप्ने दृष्टा भवेत्।] (४२)

राजा—एवम् (४३)

यदि तावदयं स्वप्नो धन्यमप्रतिबोधनम्।
अथायं विभ्रमो वा स्याद्विभ्रमो ह्यस्तु मे चिरम्॥६॥(४४)

विदूषकः—भो वयस्य! इमस्सि राअउले अवन्तिसुन्दरी णाम जक्खिणी पडिवसदि। सा तुए दिट्ठा भवे। [भोःवयस्य! अस्मिन् राजकुलेऽवन्तिसुन्दरी नाम यक्षिणी प्रतिवसति। सा त्वया दृष्टा भवेत्।] (४५)

---

(४२) एतत्—वासदत्तादर्शनम्। आ—स्मृतम्। पूर्वं मयोक्तायां कथायाम् उदकस्नानसंकीर्त्तनेन स्मृतां तां चिन्तयता सुप्तेन सा स्वप्ने दृष्टा भवेत् यं चिन्तयन् पुरुषः स्वपिति प्रायस्तमेव स्वप्ने पश्यति किन्तु चिन्ताग्रस्तेन दृष्टः स्वप्नः मृषैव भवतीति तंत्राभिनिवेशो न कार्य्यं इत्यर्थः।

(४३) तुष्यतु दुर्जनन्यायेन तत्तर्कमभ्युपगम्याह—एवमिति। एवं—सत्यमाह भवान्।

(४४) धन्यमप्रतिबोधनम्—अप्रतिबोधनं अजागरणमेव धन्यं स्पृहणीयम्। विभ्रमः भ्रान्तिः ईदृशं प्रियासमागमजनकं स्वप्नं विभ्रमं वा सदैवाहं कामये इत्यर्थः।

(४५) प्रबुद्धदशायामपि तद्दर्शनं नासम्भवीत्याह भो इति। यक्षिणी—यक्षपत्नी यक्षिण्यो हि रात्रौ यतस्ततश्चरन्तीति यदृच्छयात्रोपगता दृष्टा भवेत्, सा हि अवन्तिदेशोद्भवानां सुन्दरीणामिव वेषधारिणीति तन्नाम्ना प्रसिद्धा तत्रभवती वासवदत्तापि अवन्तिदेशोद्भवैवेति तस्यां तद्भ्रमो नासम्भव इति भावः।

राजा — न न, (४६)

स्वप्नस्यान्ते विबुद्धेन नेत्रविप्रोषिताञ्जनम् ।
चारित्रमपि रक्षन्त्या दृष्टं दीर्घालकं मुखम् ॥१०॥(४७)

अपि च वयस्य ! पश्य पश्य,

योऽयं सन्त्रस्तया देव्या तया बाहुर्निपीडितः ।
स्वप्नेऽप्युत्पन्नसंस्पर्शो रोमहर्षं न मुञ्चति ॥११॥ (४८)

विदूषकः—मा दाणिं भवं अणत्थं चिन्तिअ। एदु एदु भवं।

---

(४६) न, न, यक्षिणी नैव किन्तु वासवदत्तैव साक्षाद्दृष्टा ।

(४७) स्वप्नस्यान्ते—स्वप्नावस्थापगमे विबुद्धेन जागरावस्थामुपगतेन मया न केवलं म्रियमाणायाः चारित्रमपि प्रोषितभर्तृकसाध्वीजनोचितं व्रतमपि रक्षन्त्याः पालयन्त्याः तस्याः नेत्रविप्रोषिताञ्जनं अञ्जनशून्यनयनं दीर्घालकं जटीभूतलम्बमानकवरीकं मुखं दृष्टम् । नहीदृशं मुखं यक्षिण्याः सम्भवतीति, मद्वियुक्ता तु तादृशमुखवती सैव दृष्टेत्यर्थः। "क्रीडां शरीरसंस्कारं समाजोत्सवदर्शनम्। हास्यं परगृहे यानं त्यजेत् प्रोषितभर्तृका" इति वचनान्मुखस्य तथात्वम् ।

(४८) ननु यक्षिण्यपि प्रोषितभर्तृका तादृशमुखी च सम्भवतीत्याशङ्क्य स्वपक्षं प्रमाणान्तरेण समर्थयति अपि चेति । पश्य २ स्वयं प्रत्यक्षीकृत्यावधारय योऽयमिति । योऽयं मम बाहुः सन्त्रस्तया कदाचित् प्रबुद्धो भवेदिति भीतया देव्या निपीडितः गृहीतः सोऽयं स्वप्नेऽपि स्वप्नावस्थायामपि उत्पन्नसंस्पर्शः अनुभूतस्पर्शसुखः रोमहर्षं प्रियजनस्पर्शानन्दजनितं रोमाञ्चं न मुञ्चति अद्यापि न त्यजति । नह्येष सात्त्विकभावोदयः यक्षिण्या स्पर्शे सम्भवतीति मदुक्तमेव सत्यमिति भावः ।

(४९) एवं स्वपक्षसाधननिराशो विदूषकः स्वप्नवासवदत्ताचिन्ताव्यासक्तहृदयं वयस्यं पुनरप्रकृतिस्थमिव मन्वानोऽवसरसदृशमुपदिशंस्त-

चउस्सालं पविसामो। [मेदानीं भवाननर्थं चिन्तयित्वा । एत्वेतु भवान्। चतुःशालं प्रविशावः । ] (४६)

(प्रविश्य)

काञ्चुकीयः—जयत्वार्यपुत्रः।अस्माकं महाराजो दर्शको भवन्तमाह–एष खलु भवतोऽमात्यो रुमण्वान् महता बलसमुदयेनोपयातः खल्वारुणिमभिघातयितुम्। तथा हस्त्यश्वरथपदातीनि मामकानि विजयाङ्गानि सन्नद्धानि । तदुत्तिष्ठतु भवान्। (५०) अपि च,

भिन्नास्ते रिपवो, भवद्गुणरताःपौराःसमाश्वासिताः
पार्ष्णी यापि भवत्प्रयाणसमये तस्या विधानं कृतम् ।

---

मितोऽपसारयन्नाह—मेदानीमिति । अनर्थं चिन्तयित्वा—सर्वथायथार्थं तत्रभवतीदर्शनं भावयित्वा मा विषीदत्वित्यर्थः। 'अपहसितं कर्तुं' मिति पाठे अर्हतीति वाक्यशेषः। अद्यैव कृतद्वितीयपरिग्रहं प्रथमामुद्दिश्यैवमसम्बद्धं प्रलपन्तं त्वां दृष्ट्वा सर्वं एव श्वशुरकुलजाः समुदितास्तत्सम्बन्धिनश्च भवन्तमपहसिष्यन्तीत्यर्थः ।

(५०) जयत्वार्यपुत्रः न खल्वेष आर्यपुत्रशब्दः पत्नीभिः पतिषु व्यवहर्तव्यतया नियतः किन्तु आर्यस्य सम्बन्धिनः शतानीकस्य पुत्र इत्यर्थकः एवात्र प्रयुक्तो बोध्यः । बलसमुदयेन—सैन्यसमुदायेन । आरुणिं—वत्सराज्यापहर्तारं शत्रुम्। अभिघातयितुम्—भवता प्रयोज्यकर्त्राभिहतं—समूलमुच्छिन्नं कारयितुम् । हस्त्यश्वरथपादातीनि—हस्त्यश्वरथसहिताः पादातयो येषु तानि । मामकानि—मदीयानि । विजयाङ्गानि विजयस्याङ्गानि—साधनानि सैन्यानीत्यर्थः। सन्नद्धानि—सज्जानि । उत्तिष्ठतु—अभियानाय सज्जीभवतु ।

(५१) ते रिपवः, ये शत्रुपक्षे स्थिता आसन्, भिन्नाः भेदप्रयोगेण पृथक्कृताः उदासीना अस्मत्पक्षसमाश्रिता वा सम्पादिताः। भवद्गुणरताः

यद्यत् साध्यमरिप्रमाथजननं तत्तन्मयानुष्ठितं
तीर्णा चापि बलैर्नदी त्रिपथगा वत्साश्च हस्ते तव १२(५१)

राजा—( उत्थाय ) बाढम् । ( ५२ ) अयमिदानीं,
उपेत्य नागेन्द्रतुरंगकीर्णे
तमारुणिं दारुणकर्मदक्षम् ।

---

भवतः एव गुणैः अनुक्रोशादिभिः रता भवति अनुरक्ताः पौराः शत्रुहृतनगर-ग्रामादिवास्तव्याः प्रजाजनाः समाश्वासिताः—यूयं दुष्टनिग्रहात्सत्वरमेव मुक्ता भविष्यथेति धैर्यं प्रापिताः । भवत्प्रयाणसमये या पार्ष्णिः अभियास्यतो भवतः सैन्यपृष्ठभागः तस्या अपि विधानं कृतम् पार्ष्णिग्राहोऽपि स्थिरीकृत इत्यर्थः । अरिप्रमाथजननं—शत्रुसमूलोच्छेदजनकं यत् यत् साध्यं सम्पाद्यं तत्तत्सर्वं मयानुष्ठितं सम्विहितम् । त्रिपथगा गङ्गा नदी चापि बलैः अस्माकं सैन्यैः तीर्णा सैन्यानि गङ्गायाः उत्तरवर्ति तटं प्राप्तानीत्यर्थः । किंबहुना वत्साश्च शत्रुपहृता वत्सप्रदेशा अपि तव हस्ते तव हस्तगता एव । इदानीमारुणेर्वधमात्रमवशिष्यत इति भावः । अत्र त्रिपथगा तीर्णेत्युक्त्या उत्तरापथ एवारुणेः राजधानीति सूच्यते ।

( ५२ ) बाढं—प्रतिजाने प्रतिज्ञां करोमीत्यर्थः । भृशप्रतिज्ञयोर्बाढमित्यमरः । तदेवाह अयमिदानीमिति । इदं श्लोकान्वयि ।

(५३) इदानीम् अयमहम् उपेत्य गत्वा नागेन्द्रतुरङ्गकीर्णे—नागेन्द्रैः महाकायैः सर्प्पैः इव क्रूराचारिभिः महाग्राहादिभिरिव वा तुरंगैः अश्वैः (पक्षे) नागेन्द्रैः हस्तिभिः तुरंगैश्च कीर्णे व्याप्ते, विकीर्णबाणोग्रतरङ्गभंगे—विकीर्णाः प्रक्षिप्ता बाणाः इव तरङ्गा ( पक्षे ) बाणास्तरङ्गा इव तेभ्यः भङ्गः भयं पराजयश्च यस्मिन् तथोक्ते महार्णवाभे महासागरसदृशे अपारे भयानके चेत्यर्थः । युधि युद्धे दारुणकर्मदक्षं—दारुणे घोरकर्मणि परराज्यापहारादौ शस्त्रप्रहारादौ वा कुशलं तम् आरुणिं नाशयामि निपातयामि । "नागः

विकीर्णबाणोग्रतरंगभंगे
महार्णवाभे युधि नाशयामि ॥१३॥ (५३)

( निष्क्रान्ताः सर्वे )

इति पञ्चमोऽङ्कः ।

---

## अथ षष्ठोऽङ्कः ।

( ततः प्रवशति काञ्चुकीयः ) ( १ )

**काञ्चुकीयः**—क इह भोः ! काञ्चनतोरणद्वारमशून्यं कुरुते (२)

( प्रविश्य )

**प्रतीहारी**—अय्य ! अहं विजआ । किं करीअदु । [ आर्य ! अहं विजया । किं क्रियताम् । ] ( ३ )

**काञ्चुकीयः**—भवति ! निवेद्यतां निवेद्यतां वत्सराज्यलाभप्रवृद्धोदयायोद्यनाय-एष खलु महासेनस्य सकाशाद्वैभ्यसगोत्रः

---

पन्नगमातङ्गक्रूराचारिपु तोयदे" मेदिनी । "भङ्गस्तरंगे भेदे च रुग्विशेषे पराजये । कौटिल्ये भयविच्छित्यो" रिति हैमः । युधशब्दः पुंसि चिन्त्यः ।

इति पञ्चमोऽङ्कः ।

(१) काञ्चुकीयः—महासेन-कञ्चुकी ।

(२) क इहेति—काञ्चनमयः तोरणः बहिर्भागो यस्य तथोक्तस्य प्रासादस्य द्वारम् इह इदानीं कः अशून्यं कुरुते ? पालयतीत्यर्थः ।

(३) विजया—वत्सप्रतिहारी ।

(४) भवति—भद्रे ! निवेद्यतामित्यादरे त्वरया वा वीप्सा । वत्सराज्यलाभप्रवृद्धोदयाय—वत्सराज्यस्य लाभेन शत्रुं विजित्य पुनरात्मसात्करणेन प्रवृद्धः उदयो यस्य तस्मै । निवेद्यमाह—एप इति । सकाशात्—पार्श्वात् ।

काञ्चुकीयः प्राप्तः तत्रभवत्या चाङ्गारवत्या प्रेषितार्या वसुन्धरा नाम वासवदत्ताधात्री च प्रतीहारमुपस्थिताविति । (४)

प्रतीहारी—अय्य ! अदेसकालो पडिहारस्स । [ आर्य ! अदेशकालः प्रतिहारस्य । ] (५)

काञ्चुकीयः—कथमदेशकालो नाम ?

प्रतीहारी—सुणादु अय्यो । अज्ज भट्टिणो सय्यामहाप्पासादगदेण, केण वि वीणा वादिदा । तं च सुणिअ भट्टिणा भणिअं घोसवदीए सद्दो विअ सुणीअदि त्ति । [ शृणोत्वार्यः । अद्य भर्तुः सुशय्यामहाप्रासादगतेन केनापि वीणा वादिता । तां श्रुत्वा भर्त्रा भणितं—घोषवत्याः शब्द इव श्रूयते इति । ] (६)

काञ्चुकीयः—ततस्ततः !

प्रतीहारी—तदो तहिं गच्छिअ पुच्छिदो—कुदो इमाए वीणाए आगमो त्ति । तेण भणिअं—अह्मेहिं णम्मदातीरे कोय्य-

---

रैभ्यसगोत्रः—रैभ्यकुलजः वादरायणनामक इत्यर्थः प्रतिज्ञायौगन्धरायणे तन्नाम्न एवोल्लेखात् । अङ्गारवत्या—महासेनमहिष्या वासवदत्तामात्रा । प्रतीहारं द्वारम् ।

(५) आदेशकालः प्रतीहारस्य—प्रतीहारस्य द्वारपालस्य जनस्य राज्ञे किञ्चिन्निवेदयितुम् इदानीं देशः कालश्च नास्तीत्यर्थः ।

(६) सुखशय्या महाप्रासादगतेन यस्मिन् महाप्रासादे राज्ञः सुखशय्या आस्तीर्यते तं गतेन । सुशय्येत्यत्र सुखशय्या इत्येव पाठः भवेत् । 'सूर्य्या महाप्रासादे' ति पाठे सूर्य्या नवोढा पद्मावती तस्या इत्यर्थः । किन्तु भर्तुः इति व्यर्थं स्यादित्यपपाठ एवायम् ।

(७) आगमः—प्राप्तिः । कुय्येत्यत्र कौथ इति पाठो भवेत् । कुथः कुशः तस्यायं कौथस्तस्मिन् गुल्मे लग्ना । कुशं कुथो दर्भ इत्यमरः । मोह-प्रत्यागतेन—ससंज्ञेन । बाष्पपर्य्याकुलेन—अश्रुपरीतेन मुखेन उपलक्षितेन

गुम्मलग्गा दिट्ठा । अइ प्पओअणं इमाए उवणाअदु भट्टिणत्ति। तं च उवणीदं अंके करिअ मोहं गदो भट्टा। तदो मोहप्पच्चागदेण वप्फपय्याउलेण मुहेण भट्टिणा भणिअं दिट्ठासि घोसवदि ! सा खु ण दिस्सदित्ति। अय्य ! ईदिसो अणवसरो। कहं णिवेदेमि। [ ततस्तत्र गत्वा पृष्टः--कुतोऽस्या वीणाया आगम इति। तेन भणितं—अस्माभिर्नर्मदातीरे कौब्यगुल्मलग्ना दृष्टा। यदि प्रयोजनमनया, उपनीयतां भर्त्रेति। तां चोपनीतामंके कृत्वा मोहं गतो भर्ता। ततो मोहप्रत्यागतेन बाष्पपर्याकुलेन मुखेन भर्त्रा भणितं—दृष्टासि घोषवति ! सा खलु न दृश्यत इति। आर्य ! ईदृशोऽनवसरः। कथं निवेदयामि। ] (७)

काञ्चुकीयः—भवति ! निवेद्यताम्। इदमपि तदाश्रयमेव।(८)

प्रतीहारी—अय्य ! इअं णिवेदेमि। एसो भट्टा सय्यामहप्पासादादो ओदरइ। ता इह एव्व णिवेदइस्सं। [ आर्य ! इयं निवेदयामि। एष भर्ता शय्यामहाप्रासादादवतरति। तदिहैव निवेदयिष्यामि ]

काञ्चुकीयः—भवति ! तथा।

( उभौ निष्क्रान्तौ ) मिश्रविष्कंभकः। (९)

( ततः प्रविशति राजा विदूपकश्च )

---

भर्त्रा। सा तु—वासवदत्ता तु। अनवसरः—भर्तुः वासदत्तास्मृतिदुस्सहदुःखमग्नत्वादवसराभावः।

(८) तदाश्रयमेव—वासवदत्ताविषयकमेव। अनेन निवेदनेन राजा प्रसन्न एव भविष्यतीति भावः।

(९) मिश्रविष्कंभकः मध्यमाधमपात्राभ्यां प्रयोजित इति मिश्रः।

राजा—

श्रुतिसुखनिनदे ! कथं नु देव्याः
स्तनयुगले जघनस्थले च सुप्ता ।
विहगगणरजोविकीर्णदण्डा—
प्रतिभयमध्युषितास्यरण्यवासम् ॥१॥(१०)

अपि च, अस्निग्धासि, घोषवति ! या तपस्विन्या न स्मरति (११)

श्रोणीसमुद्वहनपार्श्वनिपीडितानि
खेदस्तनान्तरसुखान्युपगूहितानि ।

---

(१०) श्रुतिसुखनिनदे ! श्रुतौ श्रवणे श्रुत्योः कर्णयोर्वा सुखः आनन्द-जनकः निनदः शब्दः यस्या तथोक्ते घोषवति ! देव्याः वासवदत्तायाः स्तनयुगले जघनस्थले च सुप्ता वादनावसरेऽन्यदुर्लभं तत्स्थलमधिष्ठाया-नुभूतसुपुप्तिसुखात्वं विहगगणैः रजोभिश्च विकीर्णः व्याप्तः दुखितः दण्डो य स्यास्तथाभूता नितरां दुर्दशामापन्ना सतीत्यर्थः प्रतिभयं भयानकं अरण्य-वासं वननिलयं कथं नु कथमिव अध्युषिता असि अध्यवात्सीः । अहो ते दुर्दैवदुर्विलसितमित्यर्थः ।

(११) अस्निग्धासि—स्नेहहीनासि, या त्वं तपस्विन्याः शोचनीयायाः दग्धाया इत्यर्थः वासवदत्तायाः वक्ष्यमाणानि स्वोपलालनानि न स्मरसि । इदं श्लोकान्वयि ।

(१२) तान्येवाह श्रोणीति । अत्र श्रोणीशब्दः श्रोणीपुरोभागपरः जघनमित्यर्थः श्रोण्या जघनेन वादनसमये समुद्वहनानि पार्श्वनिपीडितानि यातायातसमये यथा न पतेत्तथा कक्षाभ्यां दृढं धारणानि । खेदे—चिराय वादनश्रमजन्यक्लान्तौ स्तनयोरन्तरे सुखानि सुखावहानि उपगूहितानि आलिङ्गनानि । एतानि स्वगतानि । मद्गतानि च न स्मरसीत्याह । उद्दि-श्येति । विरहे च क्षणिकेऽपि विलम्बजनितादर्शने च मामुद्दिश्य परिदेवि-

उद्दिश्य मां च विरहे परिदेवितानि
वाद्यान्तरेषु कथितानि च सस्मितानि॥२॥(१२)

विदूषकः—अलं दाणि भवं अदिमत्त सन्तप्पिअ। [ अलमिदानीं भवन् अतिमात्रं सन्तप्य। ] (१३)

राजा—वयस्य ! मा मैवं,

चिरप्रसुप्तः कामो मे वीणया प्रतिबोधितः।
तां तु देवीं न पश्यामि यस्या घोषवती प्रिया॥३॥(१४)

---

तानि कथं चिरयति वीणाचार्य्यः, तद्दर्शने क्षणमात्रमपि मे वर्षायते इत्यादीनि विप्रलपितानि। वाद्यान्तरेषु वाद्यस्य वादनीयस्य वादयितुमुपक्रान्तस्य वा गतिरागादिविशेषस्य अन्तरेषु छिद्रेषु मत्कृतासु च्युतिषु सत्सु अहो च्युतिः वीणाचार्य्यस्यापि इत्येवं रूपाणि सस्मितानि कथितानि निजकृतेषु वा छिद्रेषु कठिनोऽयमुपदेशः, च्युतिरभूत्, क्षम्यतां पुनर्यतामीतीदृशानि तानि न स्मरसि। त्वयाऽस्निग्धया विस्मृतापि सा मया विस्मर्तुं न शक्यत इति भावः। अचेतनामुद्दिश्य तथोपालम्भादियमुन्मादावस्था राज्ञः सूच्यते। अन्तरमवकाशावधि ''''च्छिद्रात्मीये ''' त्यमरः।

(१३) अलमिति। अत्र 'भवं' इति सम्बोधनम्। भवन् इति संस्कृतम्। त्यदादेः सम्बोधनाभावे तु प्रचुरतरप्रयोगादर्शनमेव मूलम्। औत्सर्गिकत्वात्क्वचिद्भवत्यपि। अतएव 'तदोः सः सौ' इति सूत्रे 'अनन्त्ययोः किम्? हे सः' इति भाष्यं, भो अच्युत भवन् अच्युतेत्यादि प्रयोगाश्च न विरुध्यन्त इति तत्त्वबोधिनीकारः। ततश्च भवन्। भोः इदानीमतिमात्रं सन्तप्य अलमित्यन्वयः, सन्तापं मा कुर्वित्यर्थः।

(१४) मे मम चिरप्रसुप्तः चिरकालम् उद्बोधनसाधनसम्पत्तेरभावान्निलीनप्रायः कामः वीणया तत्क्षणमेव प्राप्तया घोषवत्या प्रतिबोधितः जागरावस्थां प्रापितः। तु किन्तु घोषवती यस्याः प्रिया तां वासवदत्तां न पश्यामि। अतस्तत्सन्तापः त्यक्तुमशक्य इति भावः।

वसन्तक ! शिल्पिजनसकाशान्नवयोगां (१५) घोषवतीं कृत्वा शीघ्रमानय।

विदूषकः—जं भवं आणवेदि। (वीणां गृहीत्वा निष्क्रान्तः) [ यद् भवानाज्ञापयति। ]

( प्रविश्य )

प्रतीहारी—जेदु भट्टा। एसो खु महासेणस्स सआसादो रब्भसगोत्तो कञ्चुईओ देवीए अंगारवदीए पेसिदा अय्या वसुन्धरा णाम वासवदत्ताधत्ती अ पडिहारं उवट्ठिदा। [जयतु भर्ता। एष खलु महासेनस्य सकाशाद् रैभ्यसगोत्रः काञ्चुकीयो देव्याऽङ्गारवत्या प्रेषितार्या वसुन्धरा नाम वासवदत्ताधात्री च प्रतिहारमुपस्थितौ। ]

राजा—तेन हि पद्मावती तावदाहूयताम्। (१६)

प्रतीहारी— जं भट्टा आणवेदि। ( निष्क्रान्ता) [ यद्भर्ताज्ञापयति। ]

राजा—किन्नु खलु शीघ्रमिदानीमयं वृत्तान्तो महासे न विदितः। (१७)

( ततः प्रविशति पद्मावती प्रतिहारी च )

प्रतीहारी—एदु एदु भट्टिदारिआ [एत्वेतु भर्तृदारिका]

पद्मावती—जेदु अय्यउत्तो। [जयत्वार्यपुत्रः।]

राजा—पद्मावती ! किं श्रुतम् महासेनस्य सकाशाद्रैभ्य-

---

(१५) नवयोगाम्—तन्त्रीदण्डादिपरिष्कारेण पुनर्नवीकृताम्।

(१६) सपत्नीबन्धुषु पद्मावत्याः कीदृशं हृदयमिति परिच्छेत्तुं प्रथमं तदाह्वानमादिशति तेनेति।

(१७) अयं वृत्तान्तः—पद्मावतीपरिणयरूपः।

सगोत्रः काञ्चुकीयः प्राप्तस्तत्रभवत्या चाङ्गारवत्या प्रेषिताऽऽर्या वसुन्धरा नाम वासवदत्ताधात्री च प्रतिहारमुपस्थिताविति ।

पद्मावती—अय्यउत्त ! पिअं मे ञादिकुलस्स कुसलवुत्तन्तं सोदुं [आर्यपुत्र ! प्रियं मे ज्ञातिकुलस्य कुशलवृत्तान्तं श्रोतुम् ।] (१८)

राजा—अनुरूपमेतद्भवत्याभिहितं—वासवदत्तास्वजनो मे स्वजन इति । पद्मावति ! आस्यताम् । किमिदानीं नास्यते ।

पद्मावती—अय्यउत्त ? किं मए सह उवविट्ठो एदं जणं पेक्खिस्सदि । [आर्यपुत्र ! किं मया सहोपविष्ट एतं जनं प्रेक्षिष्यते । ] (१९)

राजा—कोऽत्र दोषः ।

पद्मावती—अय्यउत्तस्स अवरो परिग्गहो त्ति उदासीणं विअ होदि । [आर्यपुत्रस्यापरः परिग्रह इति उदासीनमिव भवति । ] (२०)

राजा—कलत्रदर्शनार्हं जनं कलत्रदर्शनात् परिहरतीति बहुदोषमुत्पादयति । (२१) तस्मादास्यताम् ।

---

(१८) मे इति मध्यमणिन्यायेन प्रियं ज्ञातिकुलस्येत्युभयत्रान्वेति । मे ज्ञातिकुलस्य तातकुलस्य कुशलवृत्तान्तं श्रोतुं मे प्रियम् अभीष्टम् । "ज्ञातिस्तातसगोत्रयो" रिति मेदिनी ।

(१९) एतं जनं—तातकाञ्चुकीयं आर्यां धात्रीं च । एतदनुचितमिवेति नास्ये इत्याशयः ।

(२०) आर्यपुत्रस्य अपरः परिग्रह इति अन्या द्वितीया पत्नी इत्येतदुदासीनमिव भवति अनभिमतमिव तयोः सम्पद्यत इति सहासनं नोचितमिति भावः ।

(२१) कलत्रदर्शनयोग्यमपि जनं कलत्रदर्शनात्परिहरति वर्जयतीत्येष व्यवहारः बहुदोषं नूनमेषा कुरूपा सदोषा वेति त्वद्गतम् एष इदानीम-

पद्मावती—जं अय्यउत्तो आणवेदि ( उपविश्य ) अय्यउत्त ! तादो वा अंबा वा किं णु खु भणिस्सदि त्ति आविग्गा विअ संवुत्ता। [ यदार्यपुत्र आज्ञापयति । आर्यपुत्र ! तातो वाम्बा वा किन्नु खलु भणिष्यतीत्याविग्नेव संवृत्ता।] ( ३२ )

राजा—पद्मावति ! एवमेतत् ।

किं वक्ष्यतीति हृदयं परिशङ्कितं मे
कन्या मयाप्यपहृता न च रक्षिता सा ।
भाग्यैश्चलैर्महदवाप्तगुणोपघात:
पुत्र: पितुर्जनितरोष इवास्मि भीत: ।।४।। (२३)

---

स्मान्स्वजनानपि परजनानिवावमन्यते इत्येवं मद्गतं च बहुं तदनुचिता-पेक्षयाप्यधिकं दोषमपवादं जनयतीत्यर्थः ।

(२२) तातः महासेनः अम्बा अङ्गारवती वा किन्नु खलु वक्ष्यति मम परिणयं श्रुत्वा भर्त्सयिष्यत्यनुमोदयिष्यति वेति आविग्ना उद्विग्ना सम्वृत्तास्मि ।

(२३) मे अपि ममापि हृदयं तातः अम्बा वा किं वक्ष्यतीति परि-शङ्कितं सापराधतया सर्वथा संजातशङ्कं वर्तत इति । अपराधमेवाह-कन्येति । कन्या तयोरनूढा दुहिता वासवदत्ता मया अपहृता न च सा रक्षिता । उपर्युपरि मयापराधः कृत इत्यर्थः । 'क्रियासमभिहारेण विराध्यन्तं क्षमेत कः' इति भावः । चलैः चञ्चलैः अस्थायिभिरित्यर्थः । भाग्यैः वयोविद्याद्यभ्युदयैः हेतुभिः महदवाप्तगुणोपघातः महत्सु पूज्येषु जनेषु अवाप्तः उपलब्धः दृष्ट इति यावत् गुणानां शीलादीनाम् उपघातः अपचारः—भङ्गः यस्य सः यौवनमदादिना कृतपूज्यजनावमान इत्यर्थः । अतएव पितुः पुत्राभ्युदयकांक्षिणः जनकस्य जनितरोषः उत्पादितक्रोधः पुत्रः इव भीतोऽस्मि । पितुरिति षष्ठ्यन्तं पञ्चम्यन्तं च श्लेषेण । पितुः भीतः इत्यन्वयः ।

पद्मावती—ण किं सक्कं रक्खिदुं पत्तकाले । [ न किं शक्यं रक्षितुं प्राप्तकाले । ] ( २४ )

प्रतीहारी—एसो कञ्चुईओ धत्ती अ पडिहारं उवट्ठिदा। [ एष काञ्चुकीयो धात्री च प्रतीहारमुपस्थितौ । ]

राजा—शीघ्रं प्रवेश्येताम् ।

प्रतीहारी—जं भट्टा आणवेदि। ( निष्क्रान्ता ) [यद्भर्ताज्ञापयति।]

( ततः प्रविशति काञ्चुकीयो धात्री प्रतीहारी च )

काञ्चुकीयः—भोः ! ( २५ )

सम्बन्धिराज्यमिदमेत्य महान् प्रहर्षः
स्मृत्वा पुनर्नृपसुतानिधनं विषादः ।

---

(२४) प्राप्तकाले किं किमपि रक्षितुं न शक्यम् । काले मृत्यौ प्राप्ते सति किमपि रक्षितुं न शक्यमित्यर्थः। 'प्राप्तकालो न जीवती' ति वासवदत्ताया अरक्षणेऽपि नापराधः आर्यपुत्रस्येति क्षन्तुमप्यर्हत इति भावः।

(२५) भोः इति विषादे ।

(२६) इदं सम्बन्धिराज्यं सम्बन्धिनः जामातुः उदयनस्य राज्यम् एत्य आगत्य मम महान् दिष्ट्या शत्रुपहृतं राज्यं जामात्रा पुनर्लब्धमित्यतिशयितः हर्षः, पुनः पक्षान्तरे नृपसुतानिधनं भर्तृदारिकाया वासवदत्तायाः निधनं मरणं स्मृत्वा महान् विषादः जायत इति शेषः अहो व्यतिकर इत्यर्थः। 'पुनरप्रथमे मतम् । अधिकारे च भेदे च तथा पक्षान्तरेऽपि चे'ति मेदिनी । ईदृग्व्यतिकरविधायकं दैवमुपालभते किमिति । दैव विधे ! यदि परैरपहृतं राज्यं पुनः प्रत्यावर्तितम् देव्याः कुशलम् अनिधनं च स्यात् भवता साधितं स्यात् तर्हि भवता किं नाम न कृतं स्यात् ? सर्वमेवास्माकं जामातुश्च प्रियं

किं नाम देव ! भवता न कृतं यदि स्या-
द्राज्यं परैरपहृतं कुशलं च देव्याः ॥५॥(२६)

प्रतीहारी—एसो भट्टा, उवसप्पदु अय्यो। [ एष भर्ता, उपसर्पत्वार्यः । ]

काञ्चुकीयः—( उपेत्य ) जयत्वार्यपुत्रः । (२७)

धात्री—जेदु भट्टा । [ जयतु भर्ता । ]

राजा—(सबहुमानम् ) आर्य !

पृथिव्यां राजवंश्यानामुदयास्तमयप्रभुः ।
अपि राजा स कुशली मया काङ्क्षितबान्धवः॥६॥(२८)

काञ्चुकीयः—अथ किम् । कुशली महासेनः । इहापि सर्वगतं कुशलं पृच्छति । (२९)

राजा—(आसनादुत्थाय) किमाज्ञापयति महासेनः । (३०)

---

साधितं स्यात् किन्तु निर्दयेन भवतैष स्वर्णसुगन्धयोगो न कृत इत्यहो ते स्वातन्त्र्यदुर्विलसितमिति भावः ।

( २७ ) जयत्वार्यपुत्रः—भाससमये सर्वस्यापि श्वशुरपुरवासिनो जनस्य जामातरं प्रतीदृश एव समुदाचारः प्रचलित आसीदिति प्रतीयते । अन्योऽर्थस्तु पूर्ववद्बोध्यः ।

(२८) पृथिव्यां सर्वेषां राजवंश्यानाम् उदये अस्तमये च प्रभुः समर्थः भाग्यविधाता सम्राडित्यर्थः मया आकांक्षितं बान्धवं यस्य तथोक्तः स राजा महासेनः अपि कुशली ?

(२९) इहापि—अत्रत्यमपि सर्वगतं राज्यबन्धुबान्धवादिविषयकम् ।

(३०) किमाज्ञापयति—किं सन्दिशतीत्यनुक्त्वा तथोक्तिस्तस्मिन् गुराविव भक्तिं द्योतयितुम् ।

काञ्चुकीयः—सदृशमेतद् वैदेहीपुत्रस्य। नन्वासनस्थेनैव भवता श्रोतव्यो महासेनस्य संदेशः। (३१)

राजा—यदाज्ञापयति महासेनः। (३२) (उपविशति)

काञ्चुकीयः—दिष्ट्या परैरपहृतं राज्यं पुनः प्रत्यानीतमिति। (३३) कुतः—

कातरा येऽप्यशक्ता वा नोत्साहस्तेषु जायते।
प्रायेण हि नरेन्द्रश्रीः सोत्साहैरेव भुज्यते॥७॥(३४)

राजा—आर्य! सर्वमेतन्महासेनस्य प्रभावः। (३५)

अहमवजितः पूर्वं तावत् सुतैः सह लालितो
दृढमपहृता कन्या भूया मया न च रक्षिता।

---

(३१) वैदेहीपुत्रस्य—विदेह (मिथिला) राजपुत्रीतनयस्य भवतः उत्तमकुलदौहित्रस्येत्यर्थः। ननु अनुनयामि आसनस्थेनैव—आसने उपविश्यैव।

(३२) महासेनः—महासेनवत्पूज्य आर्यः इत्यर्थः।

(३३) महासेनसन्देशमाह दिष्ट्येति।

(३४) ये कातराः अधीरा वा अथवा ये अपि अशक्ताः शक्तित्रयरहिताः तेषु उत्साहः अध्यवसायः न जायते नोत्पद्यते। विजिगीषुभिर्धीरैः शक्तैश्च भवितव्यमित्यर्थः। हि यतः नरेन्द्रश्रीः राजलक्ष्मीः प्रायेण बहुधा सोत्साहैरेव जनैः भुज्यते अतो भवता सदैवमेव धीरेण शक्तेनोत्साहवता विजिगीषुणा च भाव्यमिति भावः।

(३५) सर्वमेतत्—मम धीरत्वादि महासेनप्रभावादेव सिद्धमित्यर्थः।

(३६) तदेवाह—अहमिति। पूर्वन्तावदहं अवजितः नीलगजछद्मना प्रतार्य्य निगृहीतः सुतैर्निजपुत्रैः गोपालकादिभिः सह लालितः निगृहीतोऽपि पुत्रवत्प्रतिपालितः। को नाम शत्रावेवं स्निह्यतीति भावः मया भूयः

निधनमपि च श्रुत्वा तस्यास्तथैव मयि स्वता
ननु यदुचितान् वत्सान् प्राप्तुं नृपोऽत्र हि कारणम् ८।३६

काञ्चुकीयः—एष महासेनस्य सन्देशः। देव्याः सन्देशमिहात्रभवती कथयिष्यति। (३७)

राजा—हा अम्ब !

षोडशान्तः पुरज्येष्ठा पुण्या नगरदेवता।
मम प्रवासदुःखार्ता माता कुशलिनी ननु ॥९॥(३८)

धात्री—अरोआ भट्टिणी भट्टारं सव्वगदं कुसलं पुच्छदि।
[अरोगा भट्टिनी भर्तारं सर्वगतं कुशलं पृच्छति।] (३९)

---

पुनः कृतघ्नेन कन्या वासवदत्ता दृढं निष्ठुरं यथा तथा क्रूरवदित्यर्थः। अपहृता न च रक्षिता। तस्या कन्याया निधनं मम प्रमादात् मरणमपि च श्रुत्वा मयि तथा कृतघ्ने तथैव पूर्ववदेव स्वता आत्मीयता स्थिता। शीर्षच्छेद्येऽपि मयि अहो वात्सल्यस्य पराकाष्ठेत्यर्थः। वत्सान् प्राप्तुं यत् उचितं मयि धीरत्वादि अत्र हि नृपो ननु नृपो महासेन एव कारणम्। यदि तदानीमेवाहं शत्रुबुद्ध्या तेन हतोऽभविष्यं तर्हि कुत एतद्वत्सराज्यं पुनरवाप्स्यमिति तस्य कृपैवात्र कारणमध्यवसेयमिति भावः।

(३७) एषः पूर्वोक्तः वीरपुरुषानुगुणः धीरत्वाद्युपदेशः। अत्रभवती धात्री।

(३८) षोडशान्तःपुरज्येष्ठा—षोडशसु अन्तःपुरेषु अवरोधेषु ज्येष्ठा प्रधानमहिषी। पुण्या पुण्यमयी-पूज्या नगरदेवता नगरवासिभिर्देवतावदर्चनीया। मम, प्रवासः विच्छेदः, वस च्छेदे चुरादिः। वासवदत्ताविरह इत्यर्थः तस्य दुःखेनार्ता दुःखिता माता मातृवद्भक्तिपात्री कुशलिनी ननु प्रश्ने अपि कुशलवती ?

(३९) अरोगा नीरुजशरीरा ननु निराधिः, मानसी पीडा तु तस्या वर्तत एवेति भावः। भट्टारं भवन्तम्। सर्वगतं—देहबन्धुराज्यादिविषयकम्।

राजा—सर्वंगतं कुशलमिति । अम्ब ईदृशं कुशलम् । (४०)

धात्री—मा दाणिं भट्टा अदिमत्तं सन्तप्पिदुं । [मेदानीं भर्तातिमात्रं संतप्तुम् । ]

काञ्चुकीयः—धारयत्वार्यपुत्रः । उपरताप्यनुपरता महासेनपुत्री एवमनुकम्प्यमानार्यपुत्रेण । अथवा, (४१)

कः कं शक्तो रक्षितुं मृत्युकाले
रज्जुच्छेदे के घटं धारयन्ति ।
एवं लोकस्तुल्यधर्मा वनानां
काले काले छिद्यते रुह्यते च ॥१०॥ (४२)

1969

---

(४०) सर्वंगतं कुशलमिति—एवं पृच्छतीति अम्ब ! ईदृशम् अनिर्वचनीयं कुशलं मम परिलुण्ठितप्रियसर्वस्वेन दुर्दैवेन यदवशेषितं तत्सर्वंगतं कुशलं वर्तत एवेत्यर्थः ।

(४१) धारयतु—आत्मानं पर्य्यवस्थापयतु प्रकृतिस्थो भवत्वित्यर्थः किञ्च वासवदत्ता न रक्षितेत्येवमपि न शोचितव्यमित्याह अथवेति ।

(४२) मृत्युकाले कः कं रक्षितुं शक्तः । न कोऽपि कमपीत्यर्थः । रज्जुच्छेदे बन्धनरज्जौ मध्येकूपं छिन्नायां सत्यां पतन्तं घटं के धारयन्ति पतनाद्वारयन्ति न केऽपीत्यर्थः । छिन्नरज्जोर्घटस्येव क्षीणायुषः प्राणिनः रक्षणमशक्यमित्यर्थः । जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य चेति न्यायमनुसृत्यापि समाश्वासयति एवमिति । एवम् ईदृशः कालायत्तः वनानां तुल्यधर्माः तुल्यः धर्मो येषां सः अनिच्, लोकः जनः काले छिद्यते नाश्यते रुह्यते च । यथा वनं काले काष्ठार्थिभिः छिद्यते पुनः स्वयं रुह्यते जन्यते च एवं लोकोऽपि प्रथमप्रारब्धावस्थानेन द्वितीयप्रारब्धोपक्रमेण च जन्यते इत्यर्थः मृतस्य जन्मेव जातस्य मृत्युरपि ध्रुव इति तदर्थं शोको व्यर्थ इति भावः ।

राजा—आर्ये ! मा मवम्,
महासेनस्य दुहिता शिष्या देवी च मे प्रिया ।
कथं सा न मया शक्या स्मर्तुं देहान्तरेष्वपि ॥११॥(४३)

धात्री—आह भट्टिणी–उवरदा वासवदत्ता । मम वा महासेणस्स वा जादिसी गोवालअपालआ तादिसो एव्व तुमं पुढमं एव्व अभिप्पेदो जामादुअत्ति ! एदण्णिमित्तं उज्जइणिं आणीदो । अणग्गिसक्खिअं वीणाववदेसेण दिण्णा । अत्तणो चवलदाए अणिव्वुत्तविवाहमंगलो एव्व गदो । अंहअ अह्मेहिं तव अ वासवदत्ताए अ पडिकिदिं चित्तफलआए आलिहिअ विहाहो णिव्वुत्तो । एसा चित्तफलआ तव सआसं पेसिदा । एदं पेक्खिअ णिव्वुदो होहि । [ आह भट्टिनी-उपरता वासवदत्ता । मम वा महासेनस्य वा यादृशौ गोपालकपालकौ,

---

(४३) एवमपि सा निजालौकिकंगुणगणमहिम्ना विस्मर्तुं न शक्यत इत्याह आर्येत्यादि । महासेनस्य सम्राजः मयि लोकोत्तरवात्सल्यवतश्च दुहिता वीरकन्येत्यर्थः मम शिष्या वीणाशिक्षाछात्री, देवी पट्टमहिषी, प्रिया वल्लभा च सा वासवदत्ता देहान्तरेषु जन्मान्तरेष्वपि मया स्मर्तुं कथं न शक्या ? सर्वथैव शक्येत्यर्थः ।

(४४) अथ धात्री महिष्याः सन्देशं श्रावयति आहेति । गोपालकपालकौ आवयोः पुत्रौ यादृशौ वात्सल्यभाजनभूतौ तादृश एव त्वमपि प्रथममेव निग्रहात्पूर्वमेव जामाता इति अभिप्रेतः त्वां जामातरमवश्यं विधास्याव इति स्थिरीकृत इत्यर्थः । एतन्निमित्तं जामातृत्वविधानार्थमेव नतु निकारार्थम् उज्जयिनीम् आनीतः गत्यन्तराभावान्नीलगजच्छद्मना निगृह्य निजराजधानीं विशालां समुपस्थापितः । फलमुखगौरवं न दोषायेत्यवग्रहजनितः खेदो वत्सेन न कर्तव्य इति भावः । अनग्निसाक्षिकं नास्ति अग्निः साक्षी यस्मिन् कर्मणि तद्यथा तथा । वीणाव्यपदेशेन वीणां शिक्षयितुं तुभ्यं

९

तादृश एव त्वं प्रथममेवाभिप्रेतो जामातेति। एतन्निमित्तमुज्ज-यिनीमानीतः। अनग्निसाक्षिकं वीणाव्यपदेशेन दत्ता। आत्मन-श्चपलतयाऽनिर्वृत्तविवाहमंगल एव गतः। अथ चावाभ्यां तव च वासवदत्तायाश्च प्रतिकृतिं चित्रफलकायामालिख्य विवाहो निर्वृत्तः। एषा चित्रफलका तव सकाशं प्रेषिता। एतां प्रेक्ष्य निर्वृत्तो भव।] (४४)

राजा—अहो अतिस्निग्धमनुरूपं चाभिहितं तत्रभवत्या।
वाक्यमेतत् प्रियतरं राज्यलाभशतादपि।
अपराद्धेष्वपि स्नेहो यदस्मासु न विस्मृतः॥ १२॥(४५)

पद्मावती—अय्यउत्त ! चित्तगदं गुरुअणं पेक्खिअ अभि-वादेदुं इच्छामि। [आर्यपुत्र ! चित्रगतं गुरुजनं प्रेक्ष्याभिवाद-यितुमिच्छामि ] (४६)

---

ददामीति व्याजेन। वस्तुतः पत्नीत्वेनैव दत्ता। किन्तु चपलतया क्षिप्रका-रितया एतत्सर्वमस्माकं भावमननुसन्धायैवेत्यर्थः। अनिर्वृत्तविवाहमङ्गल एव—न निर्वृत्तं सिद्धं विवाहमङ्गलम् अग्निसाक्षिकं करग्रहो यस्य तथोक्त एव गतः पलायितः। अथ च—युवयोः पलायनानन्तरमपि। चित्रफल-कायां—आलेख्यपट्टिकायाम्। आलिख्य—चित्रकारद्वारा पृथक् पृथक् लिखितां सम्पाद्येत्यर्थः। निर्वृत्तः भव—वासवदत्ताप्रतिकृतिं दृष्ट्वा स्थिरो भव। वत्साविरहविधुरं वत्समुपसान्त्वयितुं नातः परमुपायान्तरमस्मदधीनं किञ्चिदित्यर्थः अत्र फलकाशब्दस्य स्त्रीत्वं चिन्त्यम्। क्षिपकादेराकृतिगण-त्वात्तु नेत्वम्।

(४५) अपराद्धेष्वपि—कृतापराधेष्वपि।
(४६) गुरुजनं—पूज्यामत्रभवतीं वासवदत्ताम्।

धात्री—पेक्खदु पेक्खदु भट्टिदारिआ । ( चित्रफलकां दर्शयति) [ प्रेक्षतां प्रेक्षतां भर्तृदारिका ।]

पद्मावती—( दृष्ट्वा आत्मगतम् ) हं अदिसदिसी खु इअं अय्याए आवन्तिआए । (प्रकाशम् ) अय्यउत्त ! सदिसी खु इअं अय्याए [दृष्ट्वा आत्मगतं, हम् अतिसदृशी खल्वियमार्याया आवन्तिकायाः। प्रकाशं, आर्यपुत्र ? सदृशी खल्वियमार्यायाः।](४७)

राजा — न सदृशी ! सैवेति मन्ये । भोः कष्टम् (४८)

अस्य स्निग्धस्य वर्णस्य विपत्तिर्दारुणा कथम् ।
इदं च मुखमाधुर्यं कथं दूषितमग्निना ॥१३॥ (४९)

पद्मावती—अय्यउत्तस्स पडिकिदिं पेक्खिअ जाणामि इअं

---

(४७) हं—वितर्के । इयं वासवदत्ताप्रतिकृतिः आर्याया अवन्तिकाया अतिसदृशी सर्वथा समानः अतिसादृश्याद्द्वयोरैक्यमाशङ्क्य साक्षाद्दृष्टायाः प्रतिकृतिरयथार्था यथार्था वेति निर्णेतुमशक्ता तत्सहचरं पृच्छति आर्यपुत्रेति । इयं प्रतिकृतिः आर्य्याया वासवदत्तायाः सदृशी खलु ? सर्वथा समाना किम् ? चित्रकारस्य ज्ञानशैथिल्यादिना विसदृशी अपि भवितुमर्हति मया च न साक्षाद्दृष्टार्येति सांशयिकी भवन्तं तथा पृच्छामीत्यर्थः ।

(४८) चित्रकरगतज्ञानशैथिल्याद्यभावेऽपि सादृश्ये भेदोऽपि भवतीति तत्प्रतिषेधति नेति । न सदृशी किन्तु सैव वासवदत्तैवेत्यहं मन्ये ।

(४९) चित्रे प्रियारूपं दृष्ट्वा नवीनभूतशोकः शोचते—भोः कष्टमिति, स्निग्धस्य चक्षुःसंवननस्य अस्य वर्णस्य चम्पकपुष्पवद्गौरस्य देहस्य दारुणा दुस्सहा विपत्तिः कथं कथमिवाभूत् ? इदं च मुखमाधुर्य्यम् अग्निना कथं दूषितम् । अहो नैष्ठुर्य्यमग्नेरिति भावः ।

(५०) शाब्दापेक्षया प्रत्यक्षप्रमाणस्य बलवत्त्वात्तथैव सादृश्यं परीक्षितुमाह आर्य्यपुत्रस्येति आर्य्यपुत्रस्य मया दृष्टस्य । मया प्रत्यक्षीकृतस्यार्य-

अय्याए सदिसी ण वेत्ति। [आर्यपुत्रस्य प्रतिकृतिं प्रेक्ष्य जानामीयमार्याया सदृशी न वेति ] (५०)

धात्री—पेक्खदु पेक्खदु भट्टिदारिआ। [ प्रेक्षतां प्रेक्षतां भर्तृदारिका ]

पद्मावती—( दृष्ट्वा ) अय्यउत्तस्स पडिकिदीए सदिसदाए जाणामि इअं अय्याए सदिसि त्ति। [ आर्यपुत्रस्य प्रतिकृत्याः सदृशतया जानामीयमार्यायाः सदृशीति। ] (५१)

राजा—देवि ! चित्रदर्शनात् प्रभृति प्रहृष्टोद्विग्नामिव त्वां पश्यामि। किमिदम् ? (५२)

पद्मावती—अय्यउत्त ! इमाए पडिकिदीए सदिसी इह एव्व पडिवसदि। [ आर्यपुत्र ! अस्याः प्रतिकृत्याः सदृशीहैव प्रतिवसति। ] (५३)

---

पुत्रस्य प्रतिकृतिर्यदि सदृशी स्यात्तर्हि आर्य्याया अपि सा एकचित्रितत्वात्सादृश्यमेव निश्चिता स्यादिति तव तां द्रष्टुमिच्छामीत्यर्थः।

(५१) सदृशी खल्वार्यस्येयमित्यार्याया अपीयं सदृश्येवेतीदानीं मया निस्सन्दिग्धं ज्ञातमित्यर्थः।

(५२) पद्मावत्या वासवदत्ताप्रतिकृतेः। सादृश्यपरीक्षायामाग्रहातिशयं, जातायां च तस्यां तस्या आकारवैलक्षण्यं च दृष्ट्वा पृच्छति देवीति। चित्रदर्शनात्प्रभृति चित्रदर्शनमारभ्य। प्रहृष्टोद्विग्नामिव—प्रहृष्टाम् उद्विग्नामिव च सञ्जातप्रहर्षोद्वेगामिवेत्यर्थः। किमिदम्—कुत एतत् ? प्रहर्षोद्वेगयोः किं कारणमित्यर्थः। मृतायास्तादृशमतिसुन्दरं चित्रं दृष्ट्वा विषादस्तु युक्तः हर्षस्तु कस्मादिति न वेद्मीति भावः।

(५३) हर्षोद्वेगयोः कारणमाह—आर्यपुत्रेति। इहैव—मत्समीप एव। सर्वथार्य्यासदृश्यास्तस्या उपलम्भादेव प्रहृष्टा, किन्तु सा परपुरुषदर्शनं परिहरतीति कथमिव तां झटित्यानीयार्य्यपुत्रं दर्शयामीत्युद्विग्नास्मीत्यर्थः।

राजा—किं वासवदत्तायाः ? (५४)

पद्मावती—आम । (५५)

राजा—तेन हि शीघ्रमानीयताम् ।

पद्मावती—अय्यउत्त ! मम कराभावे केणवि बह्मणेण मम भइणिअत्ति णासो णिक्खित्तो । पोसिदभत्तुआ परपुरुसदंसणं परिहरदि । ता अय्यं मए सह आअदं पेक्खिअ जाणादु अय्यउत्तो । [ आर्यपुत्र ! मम कन्याभावे केनापि ब्राह्मणेन मम भगिनीकेति न्यासो निक्षिप्तः । प्रोषितभर्तृका परपुरुषदर्शनं परिहरति । तदार्यां मया सहागतां प्रेक्ष्य जानात्वार्यपुत्रः ] । (५६)

राजा—

यदि विप्रस्य भगिनी व्यक्तमन्या भविष्यति ।
परस्परगता लोके दृश्यते रूपतुल्यता ॥१३॥ (५७)

---

(५४) असम्भवमिव मत्वा पृच्छति किमिति । किं वासवदत्तायाः सदृशी ?

(५५) आम—एवं, तस्या एव सदृशी ।

(५६) अथ तादृशोद्वेगकारणं स्पष्टयन्ती तदानयनं प्रतिजानीते आर्य्यपुत्रेति । मम कन्याभावे—अनूढायां मयि सत्यां भगिनीति—इयं मे भगिनीति व्यपदिश्येत्यर्थः । न्यासो निक्षिप्तः—न्यासविधया मयि स्थापितेत्यर्थः । सा च प्रोषितभर्तृका परपुरुषदर्शनं परिहरतीति—यद्यपि तदानयनं दुष्करं तथापि केनापि व्याजेन मया सहागतां तामार्य्यां दृष्ट्वा जानातु, सा तत्सदृशी न वा आर्य्यैव सा वेत्यवधारयत्वित्यर्थः ।

(५७) व्यक्तमन्या भविष्यति—सा व्यक्तं स्फुटम् अन्या वासवदत्ताभिन्ना भविष्यति, ब्राह्मणकन्यया सह विवाहासम्भवादिति भावः । वासवदत्तासादृश्यन्तु नासम्भवीत्याह परस्परेति, रूपतुल्यता—रूपसादृश्यम् ।

**प्रतिहारी**—जेदु भट्टा। एसो उज्जइणीओ वह्मणो, भट्टि-णीए हत्थे मम भइणिअ त्ति णासो णिक्खित्तो, तं पडिग्गहिदुं पडिहारं उवट्ठिदो। [ जयतु भर्ता। एष उज्जयिनीयो ब्राह्मणः, भट्टिन्या हस्ते मम भगिनिकेति न्यासो निक्षिप्तः, तं प्रतिग्रहीतुं प्रतिहारमुपस्थितः ]। (५८)

**राजा**—पद्मावति ! किन्नु स ब्राह्मणः।

**पद्मावती**—होदव्वं। [भवितव्यम्।]

**राजा**-शीघ्रं प्रवेश्यतामभ्यन्तरसमुदाचारेण स ब्राह्मणः। (५९)

**प्रतिहारी**—जं भट्टा आणवेदि। [ यद्भर्ताज्ञापयति। ]
(निष्क्रान्ता)

**राजा**—पद्मावति ! त्वमपि तामानय।

**पद्मावती**—जं अय्यउत्तो आणवेदि। [ यदार्यपुत्र आज्ञा-पयति। ] (निष्क्रान्ता)

( ततः प्रविशति परिव्राजकब्राह्मणवेषो यौगन्धरायणः प्रतीहारी च )

---

(५८) उज्जयिनीयः—उज्जयिन्यां भवः। तत्र भव इति छः। प्रति-ग्रहीतुं पुनरादातुं प्रतिहारं—द्वारम्।

(५९) अभ्यन्तरसमुदाचारेण—अतिथिसत्कारेण।

(६०) नृपतेः स्वामिनः हितार्थं पद्मावत्या सह भर्तुर्विवाहसंघटननिमित्तं राजमहिषीं वासवदत्तां प्रच्छाद्य वन्हौ दग्धेति प्रचार्य्यापनीय च, हितं परिणामे पुनाराज्यप्राप्तिरूपाभ्युदयसाधकमित्यवेक्ष्य सम्प्रधार्य इदं पद्मा-वत्या हस्ते न्यसनं कामं स्वच्छन्दं स्वामिनमपृष्ट्वैवेत्यर्थः। मया कृतम्। किन्तु मम कर्मणि अभीप्सिते तादृशे कार्य्ये सिद्धेऽपि नाम असौ पार्थिवः राजोदयनः किं वक्ष्यति निन्दिष्यत्यनुमोदयिष्यति वेति मे हृदयं परिशङ्कितं सञ्जातशङ्कं भवतीत्यर्थः। यद्यपि "नानिवेद्य प्रकुर्वीत भर्तुः किञ्चिदपि

प्रच्छाद्य राजमहिषीं नृपतेर्हितार्थं
कामं मया कृतमिदं हितमित्यवेक्ष्य ।
सिद्धेऽपि नाम मम कर्मणि पार्थिवोऽसौ
किं वक्ष्यतीति हृदयं परिशङ्कितं मे ॥१५॥(६०)

प्रतिहारी—एसो भट्टा । उपसप्पदु अय्यो । [एष भर्ता । उपसर्पत्वार्यः ]

यौगन्धरायणः—(उपसृत्य) जयतु भवान् जयतु । (६१)

राजा—श्रुतपूर्व इव स्वरः । भो ब्राह्मण! किं भवतः स्वसा पद्मावत्या हस्ते न्यास इति निक्षिप्ता ? (६२)

यौगन्धरायणः—अथ किम् ?

राजा—तेन हि त्वर्यतां त्वर्यतामस्य भगिनिका । (६३)

प्रतिहारी—जं भट्टा आणवेदि । [ यद् भर्ताज्ञापयति । ]
( निष्क्रान्ता । )

( तत प्रविशति पद्मावती आवन्तिका प्रतीहारी च )

पद्मावती—एदु एदु अय्या । पिअं दे णिवेदेमि । [एत्वेत्वार्या । प्रियं ते निवेदयामि । ]

---

स्वयम् । कार्यमापत्प्रतीकारादन्यत्र जगतीपते" रिति नीतेरापत्प्रतीकारसाधकमिदमपृष्ट्वापि कर्तव्यत्वेनानुमोदितमेव तथापि स्वेच्छाकारी अहं भर्तुः भीत एवास्मीति भावः ।

(६१) जयतु जयतु स्वामीत्यनुक्त्वा 'जयतु भवान् जयतु' इत्यपरिचितस्येवोक्तिः तावत्स्वस्वरूपप्रच्छादनाय ।

(६२) "( आत्मगतम् ) श्रुतपूर्व इव स्वरः" पूर्वं श्रुत इवेत्यर्थः । "( प्रकाशम् ) भो" इत्येवं पाठ उचितः ।

(६३) त्वर्यताम्—सत्वरमानीयताम् । प्रतीहारीं प्रति निदेशोक्तिः ।

**आवन्तिका**—किं किं ?

**पद्मावती**—भादा दे आअदो। [ भ्राता ते आगतः। ]

**आवन्तिका**—दिट्ठिआ इदाणिं पि सुमरदि। [ दिष्ट्येदानीमपि स्मरति। ] (६४)

**पद्मावती**—(उपसृत्य) जेदु अय्यउत्तो। एसो णासो। [ जयत्वार्यपुत्रः। एष न्यासः ] (६५)

**राजा**—निर्यातय पद्मावती। साक्षिमान् न्यासो निर्यातयितव्यः इहात्रभवान् रैभ्यः, अत्रभवती चाधिकरणं भविष्यतः। (६६)

**पद्मावती**—अय्य ! णीअदां दाणिं अय्या। [ आर्य ! नीयतामिदानीमार्या। ]

**धात्री**—( आवन्तिकां निर्वर्ण्य ) अम्मो भट्टिदारिआ वासवदत्ता। [ अम्मो भर्तृदारिका वासवदत्ता। ] (६७)

**राजा**—कथं महासेनपुत्री ? देवि ! प्रविश त्वमभ्यन्तरं पद्मावत्या सह। (६८)

---

(६४) स्मरति—अहो मे भाग्यमित्यर्थः।

(६५) एष न्यासः—मयि निक्षिप्ता ब्राह्मणभगिनी।

(६६) ब्राह्मणीति तामदृष्ट्वैव त्वरयति निर्यातयेति। निर्यातय—अद्यैव प्रत्यर्प्पय। साक्षिमत्—साक्षियुक्तं यथा तथा न्यासो निर्य्यातयितव्यः। रैभ्यः महासेनकञ्चुकी। अत्रभवती—धात्री च। अधिकरणं—न्यायसभा साक्षिभूतावित्यर्थः अत्र 'साक्षिमान्' इत्येव सुपाठः।

(६७) निर्वर्ण्य—साभिनिवेशं दृष्ट्वा। अहो ! आश्चर्यम्। इयन्तु भर्तृदारिका वासवदत्ता ! निस्सन्देहं सैवास्तीत्यर्थः।

(६८) अभ्यन्तरं—अन्तरालं अन्तःपुरमित्यर्थः चिरदुःखिन्या इदमेव तावदुचितमिति भावः। अत्र सहेत्यनन्तरं 'उभे तथा कुरुत' इति पठनीयम्। कथमन्यथा—संक्षिप्यतां यवनिकेत्युक्तिः सङ्गच्छते।

**यौगन्धरायणः**—न खलु न खलु प्रवेष्टव्यम् । मम भगिनी खल्वेषा । (६९)

**राजा**—किं भवानाह । महासेनपुत्री खल्वेषा ! (७०)

**यौगन्धरायणः**—भो राजन् ! (७१)

भारतानां कुले जातो विनीतो ज्ञानवाञ्छुचिः ।
तन्नार्हसि बलाद्धर्तुं राजधर्मस्य देशिकः ॥१६॥ (७२)

**राजा**—भवतु पश्यामस्तावद्रूपसादृश्यम् । संक्षिप्यतां यवनिका । (७३)

---

(६९) सहसा सम्यगभिज्ञातायां देव्यां चिरविरहक्लेशकर्शितः स्वामी कदाचिन् मुह्येदिति भिया परप्रत्ययोपनतं तादृशाभिज्ञानं विघ्नयति न खल्विति । सम्भ्रमे द्विरुक्तिः । नैव नैव प्रवेष्टव्यमित्यावन्तिकामुद्दिश्य, मम भगिनी खल्वेषेति राजानमुद्दिश्योक्तिः । मम भगिन्या भवत्या नैव परान्तःपुरे प्रवेष्टव्यं न वा भवता राज्ञा तथा भ्रान्त्या तां तथा प्रवेष्टुमादेष्टव्यमित्यर्थः । पद्मावत्यां निक्षिप्तया त्वया तया सह तथाकर्तुं युक्तत्वेऽपि रूपसादृश्यमात्रेण धात्रीप्रत्ययमात्रेण वा वासवदत्तेवेयमिति बम्भ्रम्य राज्ञा भवता तु सहसा तथादेशनं सर्वथैवायुक्तमिति भावः ।

(७०) राजा तु तथैव भ्रान्तप्राय आह किमिति । किं—अयुक्तमिति ।

(७१) नायुक्तमात्रं किन्तु बलात्कारः खल्वेष इत्याह—भो इति । भो राजन् ।

(७२) भवान् भारतानां भारतकुलजानां पाण्डवानां कुले जातः विनीतः शास्त्रीयशिक्षासम्पन्नः ज्ञानवान् प्रशस्तविवेकः शुचिः पापपङ्कस्पर्शरहितः राजधर्मस्य देशिकः आचार्य्यश्चास्ति तत् तस्मात् बलात् मम ब्राह्मणस्य भगिनीं हर्तुं नार्हसि । भारतकुलजत्वादिकं एकैकमपि भवति धार्मिकत्वं सूचयितुमलं किम्पुनः समुदितमित्येष भवतोऽधार्मिकस्येव बलात्कारो न शोभत इति भावः ।

(७३) पश्यामस्तावद्रूपसादृश्यम्—यच्छ्रवणमात्रेणाहं तथा भ्रान्तस्त-

प्रतीहारी—जं भट्टा आणवेदि। [यद्भर्ताज्ञापयति।] (यवनिकामपसारयति। ) (७४)

यौगन्धरायणः—जयतु स्वामी। (७५)

वासवदत्ता—जेदु अय्यउत्तो। [जयत्वार्यपुत्रः।]

राजा—अये! असौ यौगन्धरायणः, इयं महासेनपुत्री।

किन्तु सत्यमिदं स्वप्नः सा भूयो दृश्यते मया।
अनयाप्येवमेवाहं दृष्टया वञ्चितस्तदा ॥१७॥(७६)

यौगन्धरायणः—स्वामिन्! देव्यपनयेन कृतापराधः खल्वहम्। तत् क्षन्तुमर्हति स्वामी। (पादयोः पतति। ) (७७)

---

द्रूपसादृश्यं तावत्परीक्षे इत्यर्थः। आत्मनि बहुवचनम् पश्याम इति। संक्षिप्यतां यवनिका—यवनिका—तिरस्करणी यां प्रसार्य्य सा तिरोधानमवापिता सा संक्षिप्यतां अपसार्य्यताम् उत्थाप्यतामित्यर्थः।

(७४) अतःपरमत्र—"प्रतिहारी—जं भट्टा आणवेदि (यद्भर्ताज्ञापयति) (यवनिकामपसारयति)। इति पूरणीयम्।

(७५) यौगन्धरायणः—( तपस्विब्राह्मणवेशं परित्यज्य ) इति पाठः भ्रष्ट इव प्रतीयते।

(७६) इदं वासवदत्तादर्शनं किन्तु सत्यं यथार्थं। स्वप्नः किन्तु? अयथार्थं वा किन्तु? सा वासवदत्ता मया भूयः पुनरपि दृश्यते। तदा राजगृहावस्थितिकाल एवमेव दृष्टयाप्यनया अहं वञ्चितः भूयोऽदर्शनेन प्रतारितः। तदानीमिवेदानीमपीयं मां न वञ्चयेदित्यत्र किम्प्रमाणमिति भावः।

(७७) तदानीन्तनवञ्चनेऽपि ममैवापराध इति क्षमां भिक्षते स्वामिन्निति। देव्यपनयेन—देव्या अपनयेन अपसार्य्यान्यत्र न्यसनेन अहं खलु अहमेव कृतापराधः न तु देवी। कार्य्यानुरोधात् स्वामिनोऽपि सङ्गोप्यापनीय चान्यत्र यावत्कार्य्यसिद्धिं भवत्यात्र प्रच्छन्नया स्थातव्यमित्युक्त्वा न्यस्तया देव्या तत्समयपालनानुरोधादेव तथाचरितमित्यहमेवापराध्यस्मीति तत्क्षमां प्रार्थये इति पिण्डितोऽर्थः।

राजा—(उत्थाप्य) यौगन्धरायणो भवान् ननु। (७८)
मिथ्योन्मादैश्च युद्धैश्च शास्त्रदृष्टैश्च मन्त्रितैः।
भवद्यत्नैः खलु वयं मज्जमानाः समुद्धृताः॥१८॥(७९)
यौगन्धरायणः—स्वामिभाग्यानामनुगन्तारो वयम्।(८०)
पद्मावती—अम्महे अय्या खु इअं। अय्ये ! सहीजणसमुदाआरेण अदिक्कंतो समुदाआरो। ता सीसेण पसादेमि। [अहो

(७८) यौगन्धरायणो भवान् ननु ! नन्वित्यवधारणे। यो हि सदा सर्वथा—मदापत्प्रतीकारपरायणतया मदीयाभ्युदयैकसाधनप्रवणप्राणतया चावधारितः नतु कदाप्यपराधितया निश्चितः स्वामिभक्तामात्यमूर्धन्यतयापि जगति प्रसिद्धः स एव भवान् यौगन्धरायण इत्यर्थः।

(७९) तदेवानुस्मरन् कृतज्ञतां प्रकाशयति मिथ्योन्मादैरिति। मज्जमानाः निमज्जनशीलाः ताच्छील्ये चानश्। विविधे घोरे विपदर्णवे निमज्जन्त एव ननु तत आत्मानमुद्धर्तुं क्षमा इत्यर्थः। भवद्यत्नैः मिथ्योन्मादादिभिरुपायैः समुद्धृताः परित्राताः। महासेनबन्धनाद्वत्सराजस्य तैस्तैरुपायैर्यौगन्धरायणकृतं समुद्धरणं च प्रतिज्ञानाटिकायां द्रष्टव्यम्। राज्यभ्रंशापदश्चोद्धारश्च पुनाराज्यलाभौपयिकीभिः रत्नावलीप्रभृतिभिः सह स्वामिनः परिणयसम्पादनाद्यौगन्धरायणयत्नकृताद् रत्नावल्यामत्र च स्पष्ट एव।

(८०) भृत्यानां यत्नसिद्धिरपि स्वामिभाग्यनिबन्धनैवेत्याह—स्वामीति। वयं भृत्याः स्वामिभाग्यानां अनुगन्तारः अनुसरणकारिणः। शेषे षष्ठी। 'स्वामिभाग्यानि' इत्येव सुपाठः। न लोकेति षष्ठ्याः निषेधः। स्वामिनामभ्युदये स्वामिनां भाग्यान्येव निदानानि "तादृशी जायते बुद्धिर्व्यवसायोऽपि तादृशः। सहायास्तादृशा एव यादृशी भवितव्यता" त्युक्तेस्तदनुसारिण्येव बुद्ध्याद्युपकरणसम्पत्तिः भृत्यानां यत्नसिद्धिरपीति के वयं वराकाः स्वामिनामभ्युद्धरणे इति भावः।

(८१) सखीजनसमुदाचारेण—अजानन्त्या अत्रभवतीमजानतया मया

आर्या खल्वियम् । आर्ये! सखीजनसमुदाचारेणातिक्रान्तः समुदाचारः तत् शीर्षेण प्रसादयामि । ] (८१)

वासवदत्ता—(पद्मावतीमुत्थाप्य) उट्ठेदि अविहवे! उट्ठेदि। अत्थिअं णाम सरीरं अवरज्झइ । [उतिष्ठोत्तिष्ठाविधवे! उत्तिष्ठ। अर्थित्वं नाम शरीरमपराध्यति । ] (८२)

पद्मावती—अणुग्गहिदह्मि । [अनुगृहीतास्मि । ]

राजा—वयस्य यौगन्धरायण ! देव्यपनये का कृता ते बुद्धिः! (८३)

यौगन्धरायणः—कौशांबीमात्रं परिपालयामीति । (८४)

---

वयस्याजनम्प्रति वा भवतीं प्रत्याचरितेन व्यवहारेण समुदाचारः गुरुजनं प्रत्युचितः साध्वाचारः अतिक्रान्तः उल्लङ्घितः । तत् तस्मात्तादृशापराधात् शीर्षेण प्रसादयामि शिरसा पादयोर्निपत्यानुनयामि तदपराधक्षमां भिक्षे इत्यर्थः । अतः परं ( इति पादयोः पतति ) इति पठितुं योग्यं प्रतिभाति । कथमन्यथोत्तिष्ठेत्युक्तिः सङ्गच्छेत ।

(८२) अविधवे—सौभाग्यवति ! इदानीं भर्त्रा सह सङ्गताप्यहं तव भर्तुः प्रेमोपभोगसौभाग्ये बाधिका न भविष्यामि प्रत्युत सहैवावान्तरनिर्विशेषमनुभविष्याव इति प्रसादातिशयं द्योतयितुमिदं सम्बोधनम् । तादृशसम्भ्रमातिरेकादेव चोत्तिष्ठेति त्रिरुक्तिः । अर्थित्वं—अर्थिनः स्वभगिनीति व्यपदिश्य भवतीं हस्ते मां निक्षेप्तुः ब्राह्मणस्य स्वं निक्षेपधनं नाम प्रसिद्धं शरीरं ममायं देहः अपराध्यति—वर्तमानसमीप्ये भूते लट् अपराध्यत् । यथेच्छव्यवहारयोग्यमात्मानं निर्दिश्य स्वयमेवात्मने ऽनुह्यतीत्यर्थः । यदि भवती तदानीं तथा नाज्ञास्यत् तदा नैवं व्यवाहरिष्यत्, प्रत्युत तादृश्या वराक्या मया सह सखीजनोचितो व्यवहारोऽपि भवत्या अनुग्रह एव नत्वपराध इति भावः ।

(८३) ते—त्वया । किंफलमभिसन्धाय प्रियवयस्येन देव्यपनयः कृतः?

(८४) कौशाम्बीमात्रं परिपालयामीति—कौशाम्बीमात्रं कौशाम्ब्यधि-

**राजा**—अथ पद्मावत्या हस्ते किं न्यासकारणम् ? (८५)

**यौगन्धरायणः**—पुष्पकभद्रादिभिरादेशिकैरादिष्टा स्वामिनो देवी भविष्यतीति ! (८६)

**राजा**—इदमपि रुमण्वता ज्ञातम् ? (८७)

**यौगन्धरायणः**—स्वामिन् ! सर्वैरेव ज्ञातम् ? (८८)

**राजा**—अहो शठः शठः खलु रुमण्वान् । (८९)

**यौगन्धरायणः**—स्वामिन् ! देव्याः कुशलनिवेदनार्थमद्यैव प्रतिनिवर्ततामत्रभवान् रैभ्योऽत्रभवती च । (९०)

---

कृतपूर्वं समस्तं वत्सराज्यं प्रशास्मीति फलमभिसन्धायेत्यर्थः। कथञ्चन देवीमपनीय पुनाराज्यलाभौपयिक्या कयाचन राजकन्यया सह स्वामिनः परिणयं संम्पाद्य सम्बन्धिसाहाय्येन समस्तं वत्सराज्यं पुनः प्रत्यानीय यथा. परिपालयामीत्येवं बुद्धिः कृतेति भावः ।

(८५) एवमपि विश्वासपात्रस्य कस्यचन बन्धोर्हस्ते अन्यस्य पद्मावत्या एव हस्ते देव्या न्यासे कारणं किमित्यर्थः ।

(८६) तदानीं तादृशस्य भूतबन्धोरभावाद्भविष्यद्बन्धोरेव हस्ते न्यासे स्वाभिमतकार्ये विविधसौकर्यं पर्य्यनुसन्धाय तथाकृतमित्याह पुष्पकेति । व्याख्यातश्चेदृशप्रायोंऽशः पूर्वम् ।

(८७) रुमण्वतापि इदं सर्वं ज्ञातं किमिति प्रश्नः ।

(८८) न केवलं रुमण्वतैव किन्तु वसन्तकेन गोपालकेन देव्या चेत्यादिभिः सर्वैरवाप्तजनैरिदं ज्ञातम् एतैः सर्वैः सह संमंत्र्य मयेदं कृतमित्यर्थः ।

(८९) तादृशवैशसे नित्यसन्निहितं रुमण्वन्तं सप्रणयमुपालभते अह इति शठः धूर्तः । यदर्थमयमारम्भस्तत्प्रत्यपि तस्य तन्मन्त्रस्य गोपनशाठ्यमाश्चर्यकरमित्यर्थः ।

(९०) प्रतिनिवर्त्यतामित्यनुक्त्वा प्रतिनिवर्ततामित्युक्तिस्तयोर्विषयेऽति-

राजा—न न, सर्वे वयं यास्यामो देव्या पद्मावत्या सह । (९१)

( भरतवाक्यम् )

इमां सागरपर्यन्तां हिमवद्विन्ध्यकुण्डलाम् ।
महीमेकातपत्राङ्कां राजसिंहः प्रशास्तु नः ॥१९॥(९२)

( निष्क्रान्ताः सर्वे ) इति षष्ठोऽङ्कः ।

इति स्वप्नवासवदत्तं समाप्तम् ॥

---

गौरवं द्योतयितुम् । प्रतिनिवर्ततां—प्रतिगच्छत्वित्यर्थः प्रत्येकाभिप्रेतनैक-वचनम् ।

(९१) तयोर्द्वारा तथानिवेदनमौदास्यप्रतीतिकरमिवेत्यभिप्रेत्याह न नेति । "आश्रितानां भृतौ स्वामिसेवायां धर्मसेवने । पुत्रस्योत्पादने चैव न सन्ति प्रतिहस्तकाः" इत्युक्तेः स्वामिनोरिव तयोस्तादृशी सेवा स्वयमेव गत्वा कर्तव्येति भावः । एवं कृते प्राकृतस्वीयाऽयथाचारजनितं प्रकृतवत्सराज्य-प्रत्यानयने तदीयोचितसाहाय्यापेक्षा सम्भावितं च तन्मनसो व्यलीकम-प्यपनीतं भवेदिति गूढाकूतमपि बोध्यम् ।

(९२) नाटकान्ते प्रयोज्यां 'नृपदेशादिशान्तिस्तुप्रशस्तिरभिधीयते' इत्युक्तलक्षणां प्रशस्तिमुपन्यस्यति इमामिति । नः अस्माकं राजसिंहः सिंह इव शौर्य्यादिगुणसम्पन्नः राजा शासकः सागरपर्यन्तां ससागरां सागरा-म्बरामित्यर्थः । हिमवद्विन्ध्यकुण्डलां कुण्डलाभ्यामिव हिमवद्विन्ध्यपर्व-ताभ्यामलंकृताम् । एकातपत्राङ्कां—एकमेवातपत्रं छत्रं अङ्कं चिह्नं यस्या-स्ताम् एकच्छत्रामित्यर्थः । एवम्विधविशेषणाम् इमां महाभारतभूमिं प्रशास्तु पालयतु सार्वभौमो भवतु इत्यर्थः । अथवा नः अस्मांश्च प्रशास्तु शान्त्या-दिसर्वैष्टस्वप्रकृष्टशासनजनितसुखसाम्राज्येन यो जयत्वित्यर्थः । आत्मनः भारतभूमेः प्रजानां च सिद्धिरस्त्विति भाव इति शिवम् ।

* श्रीः *

# स्वप्नवासवदत्ता



( मङ्गलगानवाद्य के बाद सूत्रधार आता है )

सूत्रधार—बलराज जी की वे नवोदित चन्द्रमा के समान सुन्दरोज्वल, प्यारी पत्नी रेवती को मद्य पिलाने वाली कमल की सी कोमल और वसन्तकालीन विटपों के समान सब प्रकार सुन्दर भुजायें दर्शकगण की रक्षा करें।

मैं आप लोगों से यह निवेदन करता हूँ कि .....अरे! मैं आप लोगों से ज्योंही कुछ कहने को तैयार हुआ त्योंही यह कान में कैसी भनक आ पड़ी! अच्छा फिर सुनूँ।

( नेपथ्य में )

हटो २ लोगो, हटो।

सूत्रधार—अच्छा समझ गया।

मगधराज की कन्या के साथी प्रिय अनुचर तपोवन के लोगों को उद्धत भाव से हटा रहे हैं।

( सूत्रधार चला गया )

इति प्रस्तावना

---

## पहला—अङ्क

( दो सिपाही आते हैं )

दो सिपाही—हटो २ लोगो, हटो ।

( सन्यासी का वेष धरे हुए यौगन्धरायण और अवन्ति देश का सा पहनावा पहने वासवदत्ता का प्रवेश )

यौगन्धरायण—( कान देकर ) क्या यहाँ भी लोग हटाये जा रहे हैं ! क्योंकि—

जो धीरज धरे हुआ है, आश्रम मे रहता है, वन के फलों से ही सन्तुष्ट है, चीरवल्कलधारी है और मान तथा पूजा के योग्य है उसको डराना उचित नहीं है । अरे ! कौन ऐसा मदमत्त दुर्जन है जो अपने चञ्चल अधिकार के घमंड में भरा हुआ एकान्त शान्त तपोवन में गाँव के ऐसा हुकुम चला रहा है ?

वासवदत्ता—आर्य, कौन इस तरह लोगों को हटा रहा है ?

यौगन्धरायण—आर्यें, जो अपने को धर्म से हटा रहा है ।

वासवदत्ता—मेरे कहने का यह मतलब नहीं । मैं कहती हूँ कि क्या हम लोग भी हटाये जाँयगे ?

यौगन्धरायण—आर्यें, बिना पहचाने बड़े २ देवता भी दुत्कारे जाते हैं ।

वास०—आर्य, थकावट से जितनी पीड़ा नहीं होती उतनी इस अपमान से होती है ।

यौग०—हा ! तुमने तो इसका पहले अनुभव किया है और अब कार्यवश इसे छोड़ दिया है । इसकी चिन्ता न करनी चाहिये । क्योंकि—

